# दिल्ली संस्कृत अकादमी

कमरा नं. २२४, पुराना सचिवालय
दिल्ली प्रशासन, दिल्ली

# संस्कृत टेली फिल्म

दिल्ली संस्कृत अकादमी (दिल्ली प्रशासन) संस्कृत भाषा में चंद्रशेखर 'आजाद' पर संस्कृतमय व्यक्तित्व से विकसित होती हुई ३०-४७ मिनट की एक टेलीफिल्म का निर्माण करना चाहती है। संस्कृत भाषा के विद्वानों से इस फिल्म के सरल, सुबोध एवं आकर्षक पटकथा-आलेख आमंत्रित किए जाते हैं। पटकथा-आलेख पर तीन पुरस्कार निम्नानुसार देय होंगे:

**प्रथम पुरस्कार : रुपए १५,०००/-**
**द्वितीय पुरस्कार : रुपए १२,०००/-**
**तृतीय पुरस्कार : रुपए ९,०००/-**

पटकथा-आलेख विज्ञापन की तिथि से ४ मास के अंतराल में इस अकादमी को प्राप्त हो जाना चाहिए।

हस्ता./-
(श्रीकृष्ण सेमवाल), सचिव।


Don't you owe the
See my tail
It's out of a
Fairy Tale
Nice 'n' funny
I'm a Bunny
Foxy is my name
But I'm oh-so tame
Your Bear Hugs
are warmer
than mine



MAGGI CLUBBERS FUN LOVERS
MAGGI CLUB
मैगी-जिगुसा-पज़ल् इत्यनेन
सार्धं मैगी-पराक्रम-विश्वं सम्यक्
संयोजयन्तु।
मैगी-स्काई-ब्लेज़र इति भवतः
क्रीडायां यनेषु आरुह्य विहरन्तु।
मैगी-एस्-एड्वेन्चरर्स्
क्रीडायां सागरतो नभस्तलपर्यन्तं
आरोहणाभियानं पूर्णतां नयन्तु।
मैगी-हू-डन्-इट्- क्रीडायां चौरं
निगृह्णन्तु।
विनोदप्रियाणां कृते
आश्चर्यकराः पराक्रमाः!
मैगी-क्लब्- सदस्येभ्यः निःशुल्कं उपहाराः।
मैगी-रेडर्स-ऑफ-द-रेड्-स्टार
इति भवतः क्रीडायां चातुर्यपूर्णान्
अनभिज्ञान् विरुध्य भवतो
विनोदित्वं तोलयन्तु।
भो बालाः! मैगी-क्लब्-सदस्याः भवन्तु तथा
मैगी-जगतः पराक्रमेषु प्रविशन्तु।
एतत् केवलं मैगीनूडल्स्-
रिक्त-पिष्टिकातः पञ्च-प्रथमावरणात् कर्त्तयित्वा
स्व-मनोनुकूलं उपहारमधिगन्तुं प्रत्येकं अस्मान्
प्रेषयन्तु। षट्सु अष्टसु वा सप्ताहेषु भवन्तो मैगीक्लबतः
भवद्रुचेः अनुकूलं आमोदभरितं लोभहर्षकं उपहारं
अवाप्स्यन्ति।
स्मर्त्तव्यमिदं यत् स्वमनोनुकूलोपहारेण सार्धं
स्वनाम-धामसंकेत-जन्मतिथि मपि अस्मान् प्रेषयन्तु।
यदि भवान् मैगी-क्लब्-सदस्यो नास्ति, तदपि भवतः कृते
स्वर्णिमोऽयमवसरः। यदा उपरितन - विवरणं प्रेषयति
भवान् तदा केवलं सदस्यतावाप्तये निवेदयतु। अपि च,
वयं भवतः उपहारेण सार्धं निःशुल्कं
मैगी-क्लब्-सदस्यतापत्रमपि प्रेषयिष्यामः।
निःशुल्कं मैगी 'वर्ल्ड आफ एनीमल्स' प्रश्नमाला।
प्रत्येकमपि उपहारद्वयं, यद् भवान् अधिगच्छति,
तेन सार्धं निःशुल्कं मैगी-'वर्ल्ड आफ' एनीमल्स' -
प्रश्नमालामपि भवान् अधिगन्तुमर्हति।
अस्माकं संकेतोऽस्ति
MAGGI CLUB
P.O. Box 5788 New Delhi-110 055
MAGGI

A CHANDAMAMA PUBLICATION

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## उत्सवद्वारा राष्ट्रियैक्यम्

अस्माकं देशो वर्षस्य पूर्वार्धे यावन्तः उत्सवाः, ततोऽपि अधिकाः उत्सवाः उत्तरार्धे भवन्ति। अतः उत्सवमयः उत्तरार्धः इति वक्तुं शक्यते। एवम् आचर्यमाणेषु उत्सवेषु केचन मतीयसम्बन्धस्य द्योतकाः स्युः चेदपि बहवः उत्सवाः मतीयसम्बन्धम् अतिरिच्य स्थिताः दृश्यन्ते, यस्य च परिणामतः जनाः स्नेहप्रदर्शने एकताप्रवर्धने च आत्मानं प्रवर्तितवन्तः दृश्यन्ते।

उत्सवानाम् एतत् वैशिष्ट्यं यत् ते विविधविश्वासवतः अपि जनान् राष्ट्रियतादृष्टियुतान् कुर्वन्ति। एतस्य परिणामतः, अस्माकं प्रतिवेशी कश्चित् यदा सन्तोषं प्राप्नोति तदा सः अस्मान् अपि सन्तोषभागभागिनः करोति। यदा प्रतिवेशी वैफल्यं दुःखं वा प्राप्नोति तदा वयं गत्वा तस्य सान्त्वनं कुर्मः, येन च दुःखस्य तैक्ष्ण्यं किञ्चिदिव न्यूनं भवेत्।

एषा मनोभूमिका उत्सवसमये विशेषतः प्रकाशिता भवति, यदि जनेषु परस्परावगतिः सम्यक् भविष्यति। कश्चित् मुस्लिमेतरः इद्प्रार्थनार्थं यवनमन्दिरं न गच्छेत् नाम, किन्तु सः तं मुस्लिम्बान्धवम् अभिनन्द्य तदीयं सन्तोषं वर्धयति। एवम् एव क्रिश्चियनेतरः क्रिसुमसुदिने क्रैस्तमन्दिरं गत्वा मध्यरात्रप्रार्थनायां भागं न गृह्णीयात् नाम, तथापि सः सन्तोषाचरणे सहभागी भवितुम् अर्हति। एवम् एव हिन्दुपर्वसु अपि अहिन्दवः सन्तोषे सहभागं प्राप्नुवन्ति एव।

एवं क्रमशः उत्सवाः राष्ट्रियतादृष्टिं विस्तारयन्ति। नवरात्रोत्सवः, दीपावली, क्रिसुमस्, पोङ्गल्, होलिकोत्सवः, बक्रीद्, विषुः, वैशाखी, ओणम् इत्यादयः उत्सवाः अत्र उदाहरणानि। एते सर्वे उत्सवाः राष्ट्रियैकतासम्पादने विशेषतः सहकुर्वन्ति। एषः सप्टम्बर्मासः तु विविधानाम् उत्सवानां शोभायात्रया शोभिता अस्ति। एतस्मिन् सन्दर्भे अस्माभिः मतिभेदं विस्मृत्य शोभायात्रादिषु सोत्साहं सहभागं स्वीकृत्य उत्सवनिमित्तकः सन्तोषः अभिवर्धनीयः।

सम्पुटः–९ सप्टम्बर्–१९९२ सञ्चिका–६

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००

C. MITRA

# नामनिर्वचनम्-२

(निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।)

**नारायणः**– (नार+अयनं-ल्युट्-णत्वम्) नराणां समूहः नारम्। तदयनम् अस्य इति नारायणः। नाराः ईयन्ते अनेन इति, नरात् जातानि तत्त्वानि अयनम् अस्य इति वा नारायणः। एवं नारायणपदं पवब्रह्मणि प्रयुक्तम्। सर्वदेशव्यापी, सर्वान्तर्यामी, सर्वात्मकः इत्यादयः अर्थाः शास्त्रकारैः उक्ताः। पुराणादिषु तु त्रिमूर्तिषु अन्यतमः नारायणः उक्तः।

**विनायकः**– (विनयति-ण्वुल्) विशिष्टः नायकः इति, विगतः नायकः नियन्ता अस्य इति वा विनायकः। यः अपूर्वः नायकः सः, यस्य अन्यः नायकः न भवति सः विनायकः इति तात्पर्यम्। गणपतौ विघ्नराजे एषः शब्दः विशेषतः रूढः। 'विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' इति मेदिनीकोषः।

**सरस्वती**– (स्रियते-सृ (गतौ) असुन्। सरः अस्ति अस्याः मतुप्) प्रवाहवती सरस्वती इति उच्यते। वाक् अपि प्रवाहरूपेण मुखात् प्रवहति। अतः सरस्वतीनामिकायां नद्यां वाग्देवतायां च एषः शब्दः रूढः। 'वाणी स्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि। मनुपत्न्याम् अपि....." इति मेदिनीकोषः।

**सावित्री**– (सवितुः इयम्-अण्) सवितुः जगत्प्रसूतेः परशिवस्य इयं सावित्री। या प्रजानांम् उत्पत्तिहेतुः सा इति तात्पर्यम्। किन्तु लोके सत्यवतः पत्न्याम् अश्वपतिपुत्र्याम् एषः शब्दः विशेषतः रूढः, या च पातिव्रत्यबलेन यमं तोषयित्वा अल्पायुष्कं पतिं दीर्घायुष्मन्तं कृतवती। 'सावित्री सत्यवत्पत्न्यां ब्रह्मपत्न्युमयोः अपि'' इति मेदिनीकोषः।

---

**सूचना**– *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

वार्ताविशेषः:-

# अफगानिस्थानदेशे शान्तिः



चतुर्दशभ्यः वर्षेभ्यः अफगानिस्थाने यत् युद्धम् अनुवर्तमानम् आसीत् तत् इदानीं समाप्तप्रायम् अस्ति। मुजाहिदीन् गेरिल्लाजनाः, प्रथमं तु सोवियत्-सङ्घद्वारा व्यवस्थापितं बब्राक्कर्माल्वर्यस्य सर्वकारं विरुध्य, ततश्च डा. नजीबुल्लावर्यस्य सर्वकारं विरुध्य च युद्धं कृतवन्तः आसन्। एतावदेव न, मतानुयायिनाम् उग्रवादकारणतः अपि तत्र पारस्परिककलहः प्रवर्तमानः आसीत्।

यदा डा. नजीबुल्ला अध्यक्षपदस्य त्यागार्थं सन्नद्धः जातः तदा मुजाहिदीन्जनाः सिब्रागतुल्ला मुजादीदीवर्यं प्रार्थितवन्तः यत् तात्कालिकशासनभारः निर्वोढव्यः इति। तदा सः ३१ सदस्यैः युक्तां शासनसभाम् (कौन्सिल्) आरचय्य हज्ब्-ए-इस्लामीपक्षस्य नायकं गुलबुद्दीन् हेक्मत्यार्वर्यं प्रार्थितवान् यत् शासनसभायाः सदस्यत्वेन भागः ग्रहीतव्यः इति। तदा हेक्मत्यार् कांश्चन परिष्कारान् सूचितवान्। तत्र प्रथमः नियमः आसीत् यत् नजीबुल्लासर्वकारस्य साहाय्यं कृतवतः जनरल् अब्दुल् रशीद् दोस्तुम्वर्यस्य नायकत्वे स्थिता उब्जेक्सेना काबुल्तः निर्गच्छेत् इति। किन्तु



सिबागतुल्ला सानुरोधम् उक्तवान् यत् विना नियमविधानं हेक्मत्यार् शासनकार्ये भागं गृह्णीयात् इति। एतं प्रस्तावं गृहमन्त्री अहमद् शाह् मसूद्वर्यः समर्थितवान्, यश्च 'जमात्-ए-इस्लामीनामकस्य मन्दवादिपक्षस्य नायकः, हेक्मत्यार्वर्यस्य प्रतिपक्षी च।

अत्रान्तरे हज्ब्-ए-इस्लामीपक्षस्य सैनिकाः जनरल् रुस्तुम्वर्यस्य सेनां विरुध्य युद्धं कुर्वन्तः काबूल्नगरस्य उपरि अण्वस्त्रवर्षणम् अपि कृतवन्तः। एतस्य परिणामतः तस्मिन् नगरे स्थितानि बहूनि पुरातनानि राजभवनानि नष्टानि अभवन्। अध्यक्षस्य भवनम् अपि ध्वस्तं जातम्। तदा तात्कालिकसर्वकारः उदघोषयत् यत् एतादृशे सन्दर्भे उब्जेक्सेनायाः अपनयनं हानिकारकं स्यात् इति।

जलालुद्दीन् हक्कानीवर्यस्य नायकत्वे का चन मध्यस्थसमितिः (कमीषन्) विरोधिगणानां मध्ये सधिं प्रस्तोतुं प्रयत्नम् अकरोत्। अतः तात्कालिकसर्वकारस्य प्रतिनिधीनां हेक्मत्यार्वर्यस्य च मध्ये वार्तालापाः आरब्धाः। किन्तु एते वार्तालापाः विविधैः कारणैः मध्ये स्थगिताः भवन्ति स्म। अन्ते गते 'मे'मासस्य २५तमे दिनाङ्के प्रवृत्ते समावेशे निर्णीतं यत् प्राचीनः मतिभेदः शत्रुता वा विस्मरणीयः, तात्कालिकः इस्लामिक् सर्वकारः स्थिरीकरणीयः इति। एतस्मिन् एव समये एतदपि निर्णीतं यत् एतावत्पर्यन्तम् अनुवृत्तानि सर्वविधयुद्धानि स्थगनीयानि इति।

षण्मासाभ्यन्तरे निर्वाचनस्य व्यवस्था करणीया, काबूलतः सेना अपनेतव्या इत्यपि तदा एव निर्णीतम्। किन्तु हेक्मत्वर्यः स्वकीयं पूर्वनिर्णयं पुनरुच्चारितवान् यत् यावत् काबूलतः सेना न निर्गमिष्यति तावत् शासनसभायां भागस्वीकारः सर्वथा अशक्यः इति। निर्वाचनस्य व्यवस्थापनार्थं सेनायाः आवश्यकता अस्ति एव इति तात्कालिकसर्वकारः अभिप्रैति। निर्वाचनस्य अनन्तरं कीदृशः परिणामः दृश्येत इति कालः एव ज्ञापयिष्यति।





# राक्षसपरिणयः

हाटकपुरं पूर्वं धर्मवर्धनः नाम राजा पालयति स्म। तस्य पुत्री सुवर्णसुन्दरी। प्राप्तवयस्कायाः तस्याः सौन्दर्यं सर्वत्र ख्यातम् आसीत्।

कौण्डिन्यपुरस्य राजा धीरसेनः। सः सुवर्णसुन्दर्याः सौन्दर्यविषयं श्रुतवान् आसीत्। तस्य मनसि प्रबला आशा उत्पन्ना यत् सुवर्णसुन्दरी परिणेतव्या एव इति। अतः दूतद्वारा स्वस्य आशयं निवेदितवान्।

कौण्डिन्यपुरं हाटकपुरस्य अपेक्षया विशालं समृद्धं च। धीरसेनः धर्मवर्धनस्य अपेक्षया शूरः बलसम्पन्नः च। तथापि धीरसेनाय स्वपुत्रीं दातुं न इच्छति धर्मवर्धनः। यतः धीरसेनस्य वयः अधिकम्, पूर्वतना एका पत्नी अस्ति अपि। अतः सः विनयेन एव धीरसेनस्य अपेक्षां निराकृतवान्। एतत् निराकरणम् अपमानकरम् इति अमन्यत धीरसेनः। अतः सः महत्या सेनया सह आगत्य धर्मवर्धनं पराजित्य सपरिवारं कारागारे स्थापितवान् च। सुवर्णसुन्दरीं च विशेषव्यवस्थायुक्ते कारागारे स्थापितवान्। कदाचित् तस्याः समीपम् आगत्य उक्तवान् सः– "सुन्दरि! भवत्याः सौन्दर्यं दृष्ट्वा भवतीं परिणेतुं निश्चितवान् अस्मि। यदि भवती एतं परिणयम् अङ्गीकरोति तर्हि भवती पट्टमहिषी भविष्यति। भवत्याः मातापितरौ कारागारात् विमोच्य राज्यं प्रत्यर्पयिष्यामि च। यदि निराकरोति तर्हि बलात्कारेण वा भवतीं परिणेष्यामि एव" इति।

तदा सुवर्णसुन्दरी कोपेन– "अये, पुष्पं कदापि बलात् न विकासनीयम्। एतत् अपि अजानन् महामूर्खः भवान्। नरभक्षकं राक्षसम् अपि परिणयेयं, किन्तु राक्षससदृशं

"सुभद्रा"



भवन्तं न परिणेष्यामि'' इति उक्तवती।

''अये, व्यर्थं किमपि मा प्रलपतु। भवत्याः सौन्दर्यं दृष्ट्वा मासद्वयात्मकम् अवधिं दास्यामि। तदभ्यन्तरे मनःपरिवर्तनं प्राप्य भवतीं मां परिणेतुं सिद्धा चेत् वरम्। अन्यथा अहं बलात् भवतीं परिणीय भवत्याः मातापित्रोः पुरतः एव भवतीं शूलम् आरोपयिष्यामि'' इति उक्त्वा ततः निर्गतवान् धीरसेनः।

अनन्तरक्षणे एव कश्चन राक्षसः तस्याः पुरतः आगत्य उक्तवान्– ''भोः, अहं कश्चन राक्षसः। काञ्चुकेयः इति मम नाम। एतेन मार्गेण गच्छन् अहं भवत्याः वचनं श्रुतवान्। अतः आगतवान्। मां परिणयतु तावत् भवती'' इति।

सुवर्णसुन्दरी तु तम् आश्चर्येण पश्यन्ती– ''अये, किम् एतत् वचनम्? राक्षसाय वृकाय वा भवन्तं ददामि इति शिशुं वदन्ती माता तथा कदापि कुर्यात् वा? न खलु? तथैव मम वचनम् अपि। भवान् राक्षसः। अहं तु मानवकुलजाता। आवयोः विवाहः कथं सम्भवेत्?'' इति पृष्टवती।

''सत्कुलजाता राजकुमारी कदापि व्याजकथनेन वचनं तिरस्कर्तुं न अर्हति'' इति उक्तवान् राक्षसः।

एकत्र धीरसेनस्य पीडा। अपरत्र घोरराक्षसस्य पीडा। किं करणीयम् इति अजानती सुवर्णसुन्दरी क्षणकालस्य अनन्तरम् उक्तवती– ''यदि अहं परिणेतव्या तर्हि भवता मम इच्छात्रयं पूरणीयम्। अनन्तरम् एव विवाहप्रस्तावः'' इति।

''तिस्रः इच्छाः काः ताः?'' इति पृष्टवान् राक्षसः।

''भवता मांसभक्षणं परित्यक्तव्यम् इति प्रथमः नियमः। हिंसाप्रवृत्तिः परित्यक्तव्या इति तु द्वितीयः नियमः। अस्माकं राज्ये काचित् नदी प्रवहति। कश्चन पर्वतः नदीम् अवरुध्य तिष्ठति। अतः महान् जलसङ्ग्रहः निरुपयोगी तिष्ठति। यदि तं पर्वतं भवान् ततः निवारयेत् तर्हि देशस्य महत् हितं सिद्ध्येत्। सः पर्वतः अपसारणीयः इति तु तृतीयः नियमः'' इति उक्तवती सुवर्णसुन्दरी।

राक्षसः काञ्चुकेयः सुवर्णसुन्दरीं पश्यन्– "पर्वतं तु अहं क्षणमात्रेण अपसारयितुं शक्नोमि। तत्र मम क्लेशः कोऽपि नास्ति। किन्तु भवती अन्यनियमद्वयं यत् सूचितवती तस्य पालनम् एव महते क्लेशाय। तथापि तयोः नियमयोः पूरणार्थं प्रयत्नं करिष्यामि। जयं संसाध्य भवतीं पुनः द्रक्ष्यामि" इति उक्त्वा ततः निर्गतवान्।



ततः सप्ताहाभ्यन्तरे राजकुमार्या ज्ञातं यत् नदीप्रवाहस्य अवरोधकः पर्वतः अपसारितः अस्ति, नदी विना विरोधं प्रवहति इति। ततः द्वित्रेषु दिनेषु काञ्चुकेयः उपस्थितः अभवत्। सः नितरां कृशः जातः आसीत्। तस्य परिस्थितिं दृष्टवत्याः सुवर्णसुन्दर्याः महत् आश्चर्यम्। "एवं किमर्थं जातम्?" इति पृष्टवती सा।

तदा राक्षसः क्षीणस्वरेण उक्तवान्– "भवत्याः नियमस्य पालनार्थं मया मांसभक्षणं परित्यक्तम्। कन्दमूलफलानि खादन् जीवन् अस्मि। अतः एषा परिस्थितिः मम" इति।

एतत् वचनं श्रुत्वा सुवर्णमुखी– "भवतः निष्ठा नितरां प्रशंसार्हा। एतादृशं भवन्तं परिणेतुं सिद्धा अस्मि अहम्। किन्तु दुष्टः धीरसेनः मां पीडयन् अस्ति। सः मम मातापितरौ कारागारे स्थापितवान् अस्ति। तं मारयतु भवान्" इति उक्त्वा धीरसेनस्य पीडां विस्तरेण निवेदितवती।

सर्वं श्रुत्वा काञ्चुकेयः उक्तवान्– "धीरसेनस्य मारणे न कोऽपि क्लेशः मम। किन्तु भवत्याः नियमस्य अनुगुणम् एव अहं हिंसाप्रवृत्तिं परित्यक्तवान् अस्मि। अतः परहिंसां कर्तुं न शक्नोमि" इति।

'अहो, एतस्य निष्ठा। मां परिणेतुम् इच्छन् एषः मांसभक्षणं परित्यक्तवान्। हिंसाप्रवृत्तिम् अपि परित्यक्तवान्। एतादृशस्य परिणयेन न काऽपि हानिः' इति आलोच्य सा कांञ्चुकेयम् उक्तवती– "यावत् धीरसेनः जीवति तावत् आवयोः विवाहः न सम्भवति। सः अधर्मेण मम पितुः राज्यं स्वायत्तीकृतवान् अस्ति, मातापितरौ कारागारे स्थापितवान् अस्ति अपि। मां



परिणेतुम् इच्छन् तदा तदा बलात्कारवचनैः भाययन् अस्ति अपि। एतादृशस्य दुष्टस्य मारणात् वचनभङ्गः कृतः न भवति'' इति।

तदा काञ्चुकेयः उक्तवान्– ''दुष्टस्य मारणेन पापलेपः न भवति इति तु सत्यम् एव। किन्तु सः मद्विषये कामपि दुर्भावनां न प्रदर्शितवान्। अतः तं मारयितुम् अहं न शक्नोमि। तं मारयित्वा भवतीं परिणेष्यामि चेत् अहं स्वार्थी भविष्यामि। एतत् मम प्रियं न। क्षन्तव्यः अहम्'' इति।

काञ्चुकेयः यत् वदति तत् युक्तियुक्तम् आसीत्। अतः प्रतिवचनं किमपि वक्तुम् अशक्नुवती सुवर्णसुन्दरी उक्तवती– ''मया चिन्तयित्वा निर्णयः वक्तव्यः। अतः सप्ताहात्मकः अवधिः आवश्यकः। सप्ताहानन्तरम् अत्रैव पुनः मिलावः'' इति।

ततः सप्ताहः अतीतः। किं करणीयम् इति चिन्तयन्ती सुवर्णसुन्दरी वृक्षस्य अधः उपविष्टवती आसीत्। तदा तत्र उपस्थितः काञ्चुकेयः– ''राजकुमारि! भवत्या किं निर्णीतम्? वदतु तावत्'' इति उक्तवान्।

तावता धीरसेनः तत्र आगतः। एकत्र उपविष्टौ सुवर्णसुन्दरीं राक्षसं काञ्चुकेयं च दृष्ट्वा सः आश्चर्यचकितः क्रुद्धः च। सः कोपेन सुवर्णसुन्दरीं पृष्टवान्– ''कः एषः? किमर्थम् एतेन सह उपविश्य वार्तालापं करोति भवती?'' इति।

धीरसेनस्य दर्शनतः, तदीयं वचनं श्रुत्वा वा सुवर्णसुन्दरी न भीता। सा शान्तस्वरेण उक्तवती– ''यथा भवान् तथा एषः अपि मां परिणेतुम् इच्छति। किन्तु न हि बलात्कारेण, अपि तु मम इच्छां पुरस्कृत्य'' इति।

एतत् श्रुतवतः धीरसेनस्य कोपः नितरां प्रवृद्धः। सः कोषात् खड्गम् आकृष्य क्रोधेन– ''अये दुष्टराक्षस! याम् अहम् इच्छामि तस्यां भवतः अनुरागः वा? धिक् भवन्तम्। भवन्तम् इदानीं यमपुरीं प्रेषयिष्यामि'' इति उक्त्वा खड्गेन काञ्चुकेयं प्रहर्तुम् उद्युक्तः।

एतत् दृष्ट्वा काञ्चुकेयः अपि कुपितः अभवत्। सः धीरसेनस्य हस्तात् खड्गम् आकृष्य सुदूरं क्षिप्तवान्। ततः धीरसेनं लीलया उन्नीय परितः भ्रामयित्वा तम् अपि दूरे क्षिप्तवान्। भूमौ पतितः धीरसेनः प्राणैः

वियुक्तः अभवत्।

धीरसेनस्य मरणं श्रुत्वा कौण्डिन्यपुरस्य सैनिकाः हाटकपुरराज्यं परित्यज्य गताः। धर्मवर्धनः तत्परिवारसदस्याः च कारागारात् विमुक्ताः अभवन्। पुत्री एकं राक्षसं परिणेतुम् इच्छति इति ज्ञात्वा धर्मवर्धनः खिन्नः। तदा सुवर्णसुन्दरी पितरम् उक्तवती यत् वस्तुतः राक्षसः तु धीरसेनः, एषः काञ्चुकेयः राक्षसरूपी सन् अपि मानवसदृशः इति।

अन्ते धर्मवर्धनः एतं विवाहप्रस्तावम् अङ्गीकृतवान्। शुभे मुहूर्ते काञ्चुकेयस्य सुवर्णसुन्दर्याः च विवाहः सम्पन्नः।

विवाहदिने यदा सुवर्णसुन्दरी काञ्चुकेयस्य कण्ठे मालां स्थापितवती तदा तस्य राक्षसरूपम् अपगतम् अभवत्। सुन्दरः राजकुमारः तत्र स्थितः आसीत्।

एताम् अपूर्वां घटनां दृष्ट्वा तत्र सम्मिलिताः सर्वे आश्चर्यचकिताः। तदा सः राजकुमारः उक्तवान्– "अहं वत्सलदेशीयः युवराजः। मम नाम विक्रमसिंहः इति। विद्याभ्यासं समाप्य यदा अहं गुरुकुलतः प्रत्यागच्छन् आसं तदा काचित् देवकन्या मम परिणये इच्छां प्रकटितवती। अहं तस्याः प्रस्तावं तिरस्कृतवान्। कुपिता सा शापं दत्तवती। अहं राक्षसरूपं प्राप्तवान्। अहं यदा बहुधा प्रार्थितवान् तदा सा उक्तवती यत् यदा काचित् राजकुमारी स्वयम् इच्छया भवन्तं परिणेतुम् उद्युक्ता भवति तदा भवान् पूर्वतनं रूपं प्राप्स्यति इति। इदानीम् अहं शापविमुक्तः जातः" इति।

राजकुमारस्य वचनं श्रुत्वा राजा धर्मवर्धनः, तत्पत्नी, सर्वाः हाटकपुरप्रजाः च सन्तुष्टाः अभवन्। विवाहानन्तरं विक्रमसिंहः पत्न्या सुवर्णसुन्दर्या सह स्वराज्यं वत्सलदेशं गतवान्। मातापितरौ साष्टाङ्गं प्रणम्य प्रवृत्तं समग्रं निवेदितवान्। तदीयौ मातापितरौ महान्तं सन्तोषं प्रकटितवन्तौ। अनन्तरं विक्रमसिंहः वत्सलदेशस्य हाटकपुरस्य च राजा अभवत्। विक्रमसिंहस्य शासनकाले उभयदेशस्य अपि प्रजाः सुखेन आसन्।



# नृपनीतिः अनेकरूपा

हेमन्तपुरस्य राजा शूरसेनः। तस्य कोषस्य अध्यक्षः वीरभद्रः। जनाः वीरभद्रस्य विषये वदन्ति स्म यत् सः मिथ्यागणनां लिखन् धनं गिलन् अस्ति इति। केचन तु महाराजं दृष्ट्वा वीभद्रस्य भ्रष्टाचारं निवेदितवन्तः।

कदाचित् राजा वीरभद्रं विचारणार्थं स्वसमीपम् आहूतवान्। तदा जनाः चिन्तितवन्तः यत् राजा वीरभद्रं पदच्युतं करिष्यति इति। किन्तु राजा– "भवता यत् कृतं तत् समग्रं ज्ञातम् अस्ति मया। इतः परम् अपि यदि भवता एवं क्रियेत तर्हि अहं भवन्तं कठोरं दण्डयिष्यामि" इति उक्त्वा तं प्रेषितवान्।

राज्ञः एतं व्यवहारं दृष्ट्वा जनाः आश्चर्यचकिताः। यतः राजा भ्रष्टाचारिणां विषये निर्दयं व्यवहरति स्म। वीरभद्रविषये किमर्थम् एवं मृदुता प्रदर्शिता इति तु केनापि न ज्ञातम्। महाराज्ञी अपि राज्ञः व्यवहारस्य आन्तर्यं न ज्ञातवती। अतः सा महाराजं पृष्टवती– "एतस्य व्यवहारस्य किम् औचित्यम्?" इति।

तदा राजा मन्दहासपूर्वकम् उक्तवान्– "वीरभद्रः स्वपुत्र्योः विवाहं निर्वर्तितवान्। वासार्थं गृहम् अपि निर्मितवान्। इदानीं सः पञ्चाशद्वर्षीयः। यदि अहं तम् उद्योगात् च्यावयेयं तर्हि सः अन्यत्र उद्योगं प्राप्तुं न शक्नुयात्। अतः तम् उद्योगच्युतं न कृतवान्। 'भवता यद्यत् कृतं तत्सर्वं मया ज्ञातम् अस्ति' इति स्मारयित्वा प्रेषितवान्। 'इतः परं यदि वञ्चना क्रियेत तर्हि जीवनं कष्टकरं स्यात्' इति जानन् सः प्रामाणिकतया व्यवहरिष्यति। यदि एतम् उद्योगात् निष्कास्य अन्यं नियोजयेयं तर्हि एतस्य कष्टम् इति एकम्, अपरं तु नूतनः पुनः भ्रष्टाचारं कर्तुम् अर्हति इति। अतः नूतनस्य स्वीकरणस्य अपेक्षया विद्यमानस्य परिष्करणं निग्रहणं च वरम् इति निर्णीतं मया" इति।

"वाराङ्गनेव नृपनीतिः अनेकरूपा" इति वदन्ती हसितवती महाराज्ञी।





# मायाभवनम्

## ४

(ज्योतिषाचार्यस्य सूचनायाः अनुगुणं राजा वीरसेनः राज्ञ्या सह यदा तृतीयवारं युवराज्ञीं द्रष्टुं गतवान् तदा युवराज्ञी विश्रान्तिभवने कुत्रापि न दृष्टा। सर्वत्र अन्विष्य निराशः राजा सेनानायकम् उग्रसेनं तत्र आनायितवान्। युवराज्ञी कथम् अन्वेष्टव्या इति त्रयः अपि गभीरं चिन्तनं कृतवन्तः। चिन्तनं कुर्वन्तः एव ते राजप्रासादं प्रत्यागतवन्तः। तदनन्तरम्....)

राजा वीरसेनः सिंहासने उपविष्टः अस्ति। मन्त्री सेनानायकः, दलपतयः इत्यादयः अन्ये सभासदः च यथोचितम् आसने उपविष्टाः सन्ति। 'युवराज्ञी अदृश्यतां गता' इति वार्तां राजा संक्षेपेण श्रावितवान्।

एतां वार्तां श्रुत्वा दिग्भ्रान्ताः सभासदः एतद्विषये परस्परं समालोचनं कृतवन्तः। क्षणकालं सभायां परस्परवार्तालापध्वनिः प्रसृतः।

एतदभ्यन्तरे कश्चन मन्त्री उत्थाय उक्तवान्– "प्रभो, यदि अभयं दीयेत तर्हि अहं किञ्चित् निवेदयेयम्" इति।

राजा– "सधैर्यं वदतु तावत्" इति उक्तवान्।

तदा सः मन्त्री पुनः उक्तवान्– "प्रभो, युवराज्ञी सुदूरे निर्जने विश्रान्तिभवने



स्थापिता। किन्तु तस्याः रक्षणार्थं विशेषव्यवस्था काऽपि न कृता। अतः मम कश्चन सन्देहः। 'युवराज्ञ्या सह केवला वृद्धा परिचारिका तिष्ठेत्', 'आहारादिकं दातुं गताः परिचारिकाः प्रतिदिनं शीघ्रं प्रत्यागच्छेयुः' इत्यादयः नियमाः ज्योतिषाचार्येण खलु सूचिताः? एवं सूचयतः तस्य किं तात्पर्यं स्यात्? चिन्तनार्हः विषयः खलु एषः?'' इति।

एतत् श्रुतवतां सभासदां परस्पर-कथनकोलाहलः पुनः सभायाम् उत्पन्नः।

तदा राजा उक्तवान्– ''एतत्सन्दर्भे वाचस्पतिमिश्रविषये सन्देहः न उचितः। सः राजपरिवारस्य हितचिन्तकेषु अन्यतमः। अविश्वासस्य सर्वथा अपात्रं सः। राजकुमार्याः जन्मकुण्डलीं परिशील्य दुष्टग्रहाणां पीडां ज्ञात्वा सः सूचितवान् यत् राजकुमारी सारससरोवरे स्थापनीया इति। तेन यथा सूचितं तथा करणेन राजकुमार्याः स्वास्थ्ये विशेषप्रगतिः दृष्टा आसीत् इति वयं जानीमः एव। राजकुमारी एकाकितया स्थापनीया इति कथयतः तस्य विशिष्टः उद्देशः स्यात् एव। अहितकरः उद्देशः तु सर्वथा न आसीत् तस्य। ज्येष्ठानां व्यवहाराः प्रश्नातीताः भवन्ति। अतः सर्वत्र कारणं प्रष्टुं न शक्नुमः वयं, न प्रष्टव्यम् अपि। किन्तु एतावत् तु स्पष्टं यत् सः अस्माकं हितम् अनुलक्ष्य एव तथा सूचितवान् इति। 'प्रातः शीघ्रम् एव युवराज्ञी द्रष्टव्या। ततः क्रूरग्रहाणां गतिः कष्टदायिनी भविष्यति' इति अपि तेन सूचितम् आसीत्। ज्योतिषाचार्यः हितशत्रुः न इति स्पष्टं वदति मम अन्तरङ्गम्'' इति।

राजसभायां क्षणकालं मौनं प्रसृतम्। तदा प्रधानमन्त्री उग्रसेनः पृष्टवान्– ''एषः जगत्पत्याचार्यः कः?'' इति।

''प्रधानज्योतिषाचार्यस्य मित्रं सः। सोऽपि ज्योतिश्शास्त्रे सुनिपुणः। विशिष्टे सन्दर्भे तेन सह वाचस्पतिमिश्रः समालोचनं करोति स्म'' इति उक्तवान् राजा।

'युवराज्ञी अदृश्यतां गता इति वार्ता देशे सडिण्डिमघोषं प्रसारणीया' इति राजसभया अन्ते निर्णीतम्। तस्य दिनस्य सभा समाप्ता

अभवत् च।

युवराज्ञी अदृश्यतां गता इति वार्ता श्रुत्वा प्रजाः आश्चर्येण स्तब्धाः अभवन्। राजधान्यां जनाः तत्र तत्र समूहरूपेण सम्मिलन्तः एतद्विषये चर्चां कृतवन्तः।

"युवराज्ञीं यः अपहृतवान् सः क्रूरहृदयः अस्मद्देशीयः न स्यात् एव" इति उक्तवती काचित् वृद्धा।

"सारससरोवर घोरे अरण्ये अस्ति। विश्रान्तिभवनं परितः जलं, जले गभीरता च अस्ति। अतः राजकुमारीं यः अपहृतवान् सः न हि सामान्यः। मध्यरात्रे कदाचित् आगत्य सः एतत् कुकृत्यं कृतवान् स्यात्। परिचारिकया नाविकेन वा यथा न ज्ञायेत तथा सः उपायेन अपहृतवान् सः" इति प्रवृत्तस्य विवरणम् उक्तवान् कश्चित् अन्यः।

"सारससरोवरं परितः अरण्ये याः गुहाः सन्ति तासां पूर्णः परिचयः अस्ति मम। अतः अहम् अद्यैव युवराज्ञयाः अन्वेषणार्थम् उद्युक्तः भवामि" इति उक्तवान् कश्चन तरुणः।

अत्रान्तरे 'युवराज्ञी अदृश्यतां गता' इति वार्ता वाचस्पतिमिश्रेण अपि ज्ञाता। सः धावन् राजप्रासादम् आगत्य राजानं पृष्टवान्– "राजन्! राजकुमारीविषये मया यत् श्रुतं तत् सत्यं वा?" इति।

"यत् न भवितव्यम् आसीत् तत् जातम्। इतः परं चिन्तनीयं यत् राजकुमार्याः कोऽपि



अपायः यथा न स्यात् तथा किं करणीयम् इति। भवतः मार्गदर्शनस्य अनुगुणम् एव अस्माभिः राजकुमारी सारससरोवरे स्थापिता आसीत्। 'इदानीं सा कुत्र स्यात्' इति भवता एव ज्ञात्वा वक्तव्यम् अपि" इति गाम्भीर्येण उक्तवान् राजा।

"विद्यावती तु कुसुमकोमला सुकुमारी। न जाने, सा कुत्र स्यात्, कीदृशं कष्टं सम्मुखीकुर्वती स्यात् इति" इति अश्रूणि स्रावयन्ती उक्तवती राज्ञी।

वाचस्पतिमिश्रः क्षणकालं किमपि न उक्तवान्। अनन्तरं सः राजानं राज्ञीं च सान्त्वयन्– "इदानीं खेदेन किं प्रयोजनम्? धैर्येण तिष्ठतां भवन्तौ। राजकुमारी विपदा



ग्रस्ता नास्ति। पूर्णचन्द्रः यथा तमसा आवृतः भवति तथैव अत्रापि। अहम् इदानीम् एव गत्वा तस्याः जन्मकुण्डलीं परिशील्य 'इदानीं सा कस्यां दिशि स्यात्' इति ज्ञात्वा आगत्य निवेदयिष्यामि" इति उक्त्वा ततः निर्गतवान्।

गृहं गतः वाचस्पतिमिश्रः युवराज्ञयाः जन्मकुण्डलीं सम्यक् परिशीलितवान्। ताडग्रन्थान् पुनः परिशीलितवान्। एवं दीर्घः कालः गतः। किन्तु जगत्पत्याचार्यः तु तस्य गृहं न आगतः। अनन्तरदिने अपि सः न दृष्टः। ततः तृतीये दिने अपि यदा जगत्पत्याचार्यः न दृष्टः तदा वाचस्पतिमिश्रः आश्चर्यचकितः अभवत्। चिन्ताक्रान्तः अपि अभवत् च।

राजकुमार्याः अदृश्यतायाः विषयं सकृत् आद्यन्तं स्मृतवान् सः। राजकुमार्याः अज्ञातरोगग्रस्तता, आत्मना सूचितः निवारणोपायः, जगत्पत्याचार्येण सह एतद्विषये कृताः समालोचनाः च स्मृतिपथे आगताः।

* * * *

जगत्पतिः कश्चन राजवंशीयः। जगत्पतेः पितामहः कैलासपतिः। सः हिमगिरिराज्यस्य राज्ञः त्रिलोकपतेः सहोदरः। वृद्धस्य त्रिलोकपतेः सन्तानः कोऽपि न आसीत्। अतः कैलासपतिः चिन्तयति स्म यत् अहम् एव हिमगिरेः राजा भविष्यामि इति। किन्तु त्रिलोकपतेः मरणस्य अनन्तरं सिंहासनं भगिनीपुत्रस्य उमापतेः अधीनं जातम्। तदा राज्यच्युतः कैलासपतिः अरण्यम् आश्रितवान्। स्वस्य दौर्भाग्यस्य विषयं स्मरन् सः कदाचित् ज्योतिश्शास्त्रे आसक्तः अभवत्। देशविदेशीयान् ज्योतिषिकान् पश्यन् ज्योतिश्शास्त्रस्य अध्ययनं कुर्वन् मानवजीवने दैवलीलायाः प्रभावं दृष्ट्वा आश्चर्यं च अनुभवन् सः दिनानि यापितवान्। कैलासपतेः पुत्रः गजपतिः अपि ज्योतिश्शास्त्रे आसक्तः आसीत्। सः ज्योतिश्शास्त्रे यथा निपुणः तथैव मन्त्रतन्त्रप्रयोगेषु अपि समर्थः आसीत्। इन्द्रजालविद्या अपि सम्पादिता आसीत् तेन।



आत्मना यद्यत् ज्ञातं तत्सर्वं पुत्रं जगत्पतिं बोधितवान् सः।

जगत्पतिः पितामहेन अरण्ये निर्मितानि भवनानि पुनः सुदृढानि कृतवान्। तत्र तिष्ठन् सः पितुः सकाशात् प्राप्तायाः विद्यायाः मननं निरन्तरं कुर्वन् तासु सर्वासु विद्यासु निपुणः जातः।

जगत्पतिः स्वस्य पाण्डित्येन न सन्तुष्टः। तस्य मनसि सदा चिन्तनं भवति स्म यत् हिमगिरिराज्यस्य अन्यराज्यस्य वा सिंहासनम् अलङ्करणीयम् इति। अतः सः राजनीतेः अपि अध्ययनं कृतवान्। अकस्मात् विद्यावत्याः वार्ता तेन यदा श्रुता तदा सः चिन्तितवान् यत् सौभाग्यलक्ष्मीः मम गृहस्य पुरतः उपस्थिता अस्ति इति।

वीरगिरिराजस्य प्रीतिपात्रपुत्री विद्यावती सारससरोवरे एकाकितया निवसति स्म। वाचस्पतिमिश्रः उक्तवान् आसीत् यत् यदा ग्रहाणां वक्रगतिः समाप्ता भविष्यति तदा युवराज्ञी विवाहभाग्यं प्राप्स्यति इति। अतः जगत्पत्याचार्यः चिन्तितवान् यत् यदि विद्यावती कथञ्चित् परिणीयेत तर्हि वीरगिरिराज्यस्य सिंहासनं मदधीनं भविष्यति इति। एषः विचारः यदा मनसि आगतः तदा जगत्पत्याचार्यः मौनं स्थातुं न शक्तवान्। सः रहसि सारससरोवरपरिसरे अटन् सर्वं परिशीलितवान्। नौकाघट्टात् अनतिदूरे वृक्षाणां मध्ये तेन अस्पष्टः कश्चन मार्गः दृष्टः। सः रहसि एकां नौकाम् अपि तत्र सज्जीकृतवान्।

'विश्रान्तिगृहतः युवराज्ञी अपहरणीया। अरण्यमध्यस्थे मायाभवने स्थापनीया च। यदा ग्रहगतिः समीचीना भविष्यति तदा स्वयं गत्वा सा राज्ञे अर्पणीया। एतेन सन्तुष्टः राजा माम् एव जामातरं करिष्यति। दीर्घकालात् मम मनसि स्थितः स्वप्नः एवं साकारः भविष्यति' इति चिन्तितवान् जगत्पतिः। एतदनुगुणं कार्ये प्रवृत्तः अपि सः।

* * * *

वाचस्पतिमिश्रः जगत्पत्याचार्यस्य तन्त्रं किमपि न जानाति। दिनत्रयं सः जगत्पत्याचार्यस्य प्रतीक्षां कृतवान्। 'इतः परं

प्रतीक्षया न किमपि प्रयोजनम्' इति निश्चित्य सः चतुर्थे दिने एकाकी एव राजदर्शनार्थं निर्गतवान्।

यदा सः राजभवनं प्रविष्टवान् तदा सेनानायकः उग्रसेनः राजकुमार्याः अन्वेषणार्थं कृतान् प्रयत्नान् विस्तरेण राजानं निवेदयन् आसीत्। तत्समये उपस्थितं वाचस्पतिमिश्रं पृष्टवान् राजा– "विद्यावत्याः कोऽपि अपायः तु न स्यात् खलु?" इति।

"महाराज! अपायभीतिः तु सर्वथा नास्ति। विद्यावती यत्रकुत्रापि भवतु, सा कुशलिनी एव तिष्ठति। राजकुमारी कस्याश्चित् शक्तेः बलात्कारकारणतः ततः गता, न तु स्वेच्छया। सा च शक्तिः पश्चिमदिक्तः आगता इति अपि सुस्पष्टम्। तस्मात् निश्चितं यत् विद्यावती पश्चिमदिशि कुत्रापि स्यात् इति। अतः पश्चिमदिशि अन्वेषणप्रयत्नः विशेषतः कृतः चेत् वरं स्यात्" इति उक्तवान् वाचस्पतिमिश्रः।

"अस्माकं राज्यस्य पश्चिमदिशि गहनानि अरण्यानि सन्ति। तथापि अस्माकं सैनिकाः यथाशक्ति तत्र सर्वत्र अटित्वा अन्वेषणं कृत्वा प्रत्यागताः सन्ति। उत्तरदिशि गताः सैनिकाः तु एतावता अपि न प्रत्यागताः" इति उक्तवान् उग्रसेनः।

"ते तु अचिरात् आगच्छेयुः खलु? ज्योतिषाचार्यस्य सूचनायाः अनुगुणं



पश्चिमदिशि पुनरपि अन्वेषणप्रयत्नः प्रचलतु। अन्यच्च भवान् उक्तवान् आसीत् खलु– कश्चन युवकः युवराज्ञीम् अन्वेष्टुं सिद्धः सन् अनुज्ञां प्रार्थयति इति? सः कुत्र अस्ति? सः सैनिकसाहाय्यम् अन्यविधसाहाय्यं वा इच्छति वा?" इति उग्रसेनं पृष्टवान् राजा।

"अनुज्ञामात्रम् इच्छति सः। 'अहम् एकाकी एव गत्वा अन्वेषणं करिष्यामि' इति उक्तवान् अस्ति सः। 'यदि एतस्मिन् प्रयत्ने मम प्राणाः गच्छेयुः तर्हि मम वृद्धा माता संरक्षणीया' इति प्रार्थयति सः। दर्शनात् तु ज्ञायते यत् सः सामान्यः न इति। अतः अहं चिन्तयामि– तस्मै अनुज्ञादानम् एव वरम्

इति। एतादृशे सन्दर्भे सर्वविधाः अपि प्रयत्नाः करणीयाः भवन्ति" इति उक्तवान् उग्रसेनः।

"अस्तु, सः युवकः इदानीं कुत्र?" इति पृष्टवान् राजा।

"दुर्गद्वारसमीपे प्रतीक्षमाणः अस्ति सः। किम् अहं तम् अत्र आनाययामि?" इति पृष्टवान् उग्रसेनः।

"अविलम्बेन अत्र आनाययतु" इति आदिष्टवान् राजा।

उग्रसेनः समीपस्थं भटम् आज्ञापितवान् यत् अविलम्बेन सः युवकः अत्र आनेतव्यः इति। अनन्तरं सः वाचस्पतिमिश्रं पश्यन् पृष्टवान्– "एषु दिनेषु जगत्पत्याचार्यः दृष्टः वा भवता?" इति।

"न। चतुर्भ्यः दिनेभ्यः पूर्वं सः मम समीपम् आगतः आसीत्। सः प्रतिदिनं मत्समीपम् आगच्छति स्म। तस्य पाण्डित्यं दृष्ट्वा सन्तुष्टः अहं प्रमुखेषु विषयेषु तेन सह समालोचनं करोमि स्म। इदानीं किमर्थम् आगच्छन् नास्ति इति न ज्ञायते। कार्यान्तरं किमपि आपतितं स्यात्। यदा सः मत्समीपम् आगमिष्यति तदा तं भवत्समीपं प्रेषयिष्यामि वा?" इति पृष्टवान् वाचस्पतिमिश्रः।

"तथा करणीयं नास्ति। महाराजस्य मुखात् मया श्रुतम् आसीत् यत् युवराज्ञ्याः जातकविषये भवान् तेन सह समालोचनं करोति स्म इति। यदि सः आगतः स्यात् तर्हि युवराज्ञ्याः अदृश्यतागमनविषये किमपि वदेत् इति आशयेन पृष्टं मया" इति उक्तवान् उग्रसेनः।

वाचस्पतिमिश्रः ततः गन्तुम् उद्युक्तः। अत्रान्तरे सः तरुणः सैनिकेन सह तत्र आगतः। सः सुन्दरः आसीत्। दृढकायः चापि आसीत्। गाम्भीर्येण युक्तं तदीयं मुखं कान्त्या शोभते स्म।

'युवराज्ञीम् अन्वेष्टुम् एकाकितया गन्तुम् उद्युक्तस्य एतस्य धैर्यं नितरां प्रशंसार्हम्' इति चिन्तयन् वाचस्पतिमिश्रः राजभवनतः निर्गतवान्। –(अनुवर्तते)





# वीणावत्याः परिणयः

मध्यरात्रस्य दिनस्य च भेदम् अजानन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवतः दृढचित्तता, कार्यनिष्ठा, साहसप्रवृत्तिः इत्यादयः श्लाघ्याः एव इत्यत्र नास्ति सन्देहः। तथापि भवतः व्यवहारं पश्यतः मम कश्चन सन्देहः– भवान् यत् कुर्वन् अस्ति तत् भवतः सामर्थ्यस्य प्रतिभायाः वा अनुगुणम् अस्ति वा न वा इति। यत् कार्यं कीर्तिदायकं न भवति, यच्च अपमानकरं भवति तस्य करणेन किं प्रयोजनम्? किन्तु लोके बुद्धिवैपरीत्यात् तादृशम् अपि कार्यं कुर्वन्तः केचन दृश्यन्ते! वीणावती नाम युवतिः अत्र उदाहरणम्। तस्याः कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्, येन भवतः मार्गायासः परिहृतः

## वेतालकथा



भवेत्'' इति।

अनन्तरं बेतालेन कथा आरब्धा–

चन्द्रशिलानामके राज्ये राजराजः नाम कश्चन निर्धनः कृषिकः आसीत्। तस्य पत्न्याः नाम मीनलोचना इति। विवाहात् बहूनां वर्षाणाम् अनन्तरं ताभ्यां पुत्री प्राप्ता। जातमात्रशिशोः सौन्दर्यम् अपूर्वम्। मुखे विशिष्टा कान्तिः दृश्यते स्म। सकृत् दृष्टं चेत् पुनर्दर्शनाकाङ्क्षा अवश्यम् उत्पद्यते स्म। राजराजः पुत्रीं दृष्ट्वा सन्तोषम् अनुभवन्, ग्रामीणानां प्रशंसां बहुधा प्राप्नुवन् शिशोः नाम 'वीणावती' इति निश्चितवान्। वीणावती प्रतिपच्चन्द्रलेखा इव दिने दिने अवर्धत।

यदा सा षोडशवर्षीया तरुणी जाता तदा सौन्दर्यखनिः एव जाता। तस्याः सौन्दर्यातिशयं दृष्ट्वा सख्यः तां विनोदेन वदन्ति स्म– ''भवत्याः अपूर्वं सौन्दर्यं दृष्ट्वा कश्चन मन्मथसदृशः राजकुमारः आगत्य भवतीं परिणीय नेष्यति'' इति।

एतादृशानि वचनानि शृण्वत्याः वीणावत्याः मनसि अपि भावना आसीत्– 'सामान्येन केनचित् न, अपि तु राजकुमारेण, तत्तुल्येन अन्येन उच्चकुलजातेन धनिकपुत्रेण वा अहं परिणीता भविष्यामि' इति।

राजराजस्य आत्मीयमित्रं चन्द्रचूडः। चन्द्रचूडस्य पुत्रः शिवकुमारः। चन्द्रचूडः इच्छति स्म यत् वीणावती स्नुषात्वेन आनेतव्या इति। स्वकीयाम् इच्छां राजराजम् उक्तवान् आसीत् अपि सः।

वीणावत्याः अपूर्वं सौन्दर्यं शिवकुमारः अपि दृष्टवान् आसीत्। सा परिणेतव्या इति आशा तस्य मनसि आसीत् एव। पितुः चिन्तनम् यदा ज्ञातं तदा सः नितरां सन्तुष्टः।

कदाचित् वीणावती शिवकुमारः च मिलितवन्तौ। तदा शिवकुमारः आत्मनः अनुरागं निवेद्य– ''यदि भवती अपि इच्छेत् तर्हि अचिरात् आवयोः विवाहः प्रचलेत्'' इति उक्तवान्।

तदा वीणावती– ''भवति अल्पः अपि अनुरागः नास्ति मम। अतः भवतः परिणयं न इच्छामि अहम्'' इति उक्तवती।

एतत् श्रुत्वा शिवकुमारः खेदेन– "अस्तु तावत्। अनुरागः बलात् न उत्पद्यते। एतावत् तु जानातु यत् यदि अहं परिणयेयं तर्हि भवतीम् एव, नान्याम्" इति उक्त्वा ततः निर्गतवान्।

वीणावती चिन्तितवती– 'राजकुमारः परिणेतव्यः चेत् सुन्दरतामात्रम् अपर्याप्तम्। वेषे आधुनिकता, व्यवहारकौशलम्, वाक्पाटवम् इत्यादयः आवश्यिकाः। राज्ञीपदं कथञ्चित् यदि प्राप्येत तर्हि अनन्तरकाले तदनुगुणं मया व्यवहरणीयं भविष्यति। व्यवहारकौशलादयः तु अनुभवबलात् एव ज्ञायन्ते, नान्यथा एतादृशः अनुभवः अन्तपुरे केवलं प्राप्यंते। एतदर्थं मया राज्ञ्याः अन्तःपुरं प्रविश्य सर्वं परिशील्य ज्ञातव्यम्' इति।

वीणावत्याः सखी पद्मदीपिका नाम काचित् राज्ञ्याः परिचारिका आसीत्। तस्याः द्वारा वीणावती अन्तःपुरे परिचारिकावृत्तिं प्राप्तवती।

कदाचित् कश्चन चित्रकारः महाराज्ञीसमीपम् आगत्य– "अहं कश्चन चित्रकारः। बहूनि रमणीयानि चित्राणि रचितवान् अस्मि। भवत्यै एकं रमणीयं चित्रम् उपायनीकर्तुम् इच्छामि अपि" इति उक्त्वा एकं चित्रम् अर्पितवान्।

राज्ञी तत् चित्रं स्वीकृत्य वीणावत्याः हस्ते दत्तवती। तस्मिन् चित्रे सूर्यास्तसमयः चित्रितः आसीत्। वर्णसंयोजनं तु अपूर्वम्



आसीत्। अतः सन्तुष्टा राज्ञी कलाकाराय सहस्रं सुवर्णनाणकानि पुरस्काररूपेण दत्तवती।

चित्रकारस्य निर्गमनस्य अनन्तरं सा वीणावतीं पृष्ठवती– "चित्रं कथम् अस्ति?" इति।

"चित्रे कः विशेषः? प्रतिदिनं दृश्यमानः सूर्यास्तसमयः एव अत्र चित्रितः अस्ति। अत्र किं वा वैशिष्ट्यम्? किन्तु भवती सहस्रं सुवर्णनाणकानि दातव्यानि इति निर्णीय दत्तवती अपि अस्ति। एवं स्थिते इदानीं मम अभिप्रायस्य कथनेन किं वा प्रयोजनम्? अन्यच्च भवत्याः व्यवहारस्य औचित्यानौचित्यं विमृष्टुं मम कः



अधिकारः? तथापि एतावत् तु वदामि– एतदर्थं सहस्रं सुवर्णनाणकानि दत्तानि यत् तत् अधिकम् इत्येव मम भावना'' इति उक्तवती वीणावती।

तदा राज्ञी मन्दहासपूर्वकं– ''वीणावति! भवत्याः रूपं सुन्दरं स्यात्। किन्तु सौन्दर्यास्वादकं मनः तु नास्ति भवत्याः। अन्यच्च पुरस्कारः चित्रस्य अस्माकं च योग्यतायाः अनुगुणं दीयते। एतत् सर्वं भवती ज्ञातुं न शक्नोति'' इति उक्तवती।

पुनः कदाचित् राजा राज्ञी च अन्तःपुरे उपविश्य सुखेन वार्तालापं कुर्वन्तौ आस्ताम्। तदा कश्चन गूढचरः तत्र आगत्य– ''प्रभो, वैदेहीराज्यस्य राजा अस्माकम् राज्यस्य उपरि आक्रमणं कर्तुं सेनां सज्जीकृतवान् अस्ति। यदाकदाचित् अपि आक्रमणं कर्तुम् अर्हति सः'' इति राजानं निवेद्य ततः निर्गतवान्।

तत्समये चामरेण वीजयन्ती आसीत् वीणावती। युद्धवार्तां श्रुतवत्याः तस्याः शरीरम् अकम्पत। सा वीजनं विस्मृत्य भीत्या निश्चलं स्थितवती। महाराज्ञी अपि चिन्ताग्रस्ता जाता।

तदा राजा महाराज्ञीं पश्यन्– ''वैदेहीराजस्य आक्रमणं पूर्वनिरीक्षितम् एव। किन्तु सः विनायासम् आक्रमणं कर्तुं न अर्हति। आक्रमणं करणीयं चेत् तेन स्वर्णमुखीनदी क्रमणीया। नदीतीरे अस्माकं सेना प्रत्याक्रमणार्थं सिद्धा अस्ति एव। अतः न काऽपि भीतिः'' इति उक्त्वा वीणावतीं दृष्ट्वा पुनः उक्तवान्– ''अन्तःपुरे स्थित्वा युद्धवार्ताश्रवणेन एव भीतिः प्राप्यते चेत् बहिः स्थितानां सामान्यानां का कथा? भवती प्रथमं धैर्यवती भवतु'' इति।

कदाचित् राज्ञी चन्द्रमती वनविहारार्थं निर्गतवती। सर्वाः परिचारिकाः ताम् अनुसृतवत्यः। किन्तु वीणावती शिरोवेदनाव्याजम् उक्त्वा अन्तःपुरे एव स्थितवती। तस्याः चिन्तनम् आसीत् यत् महाराज्ञ्याः अनुपस्थितौ तदीयैः आभरणादिभिः आत्मानम् अलङ्कृत्य दर्पणे द्रष्टव्यम् इति।

राज्ञी यदा निर्गतवती तदा वीणावती राज्ञ्याः वस्त्राणि धृत्वा स्वस्य प्रतिबिम्बस्य-दर्शने उद्युक्ता अभवत्।

तस्मिन् एव समये कश्चन युवकः तत्र आगतवान्। वीणावत्याः अपूर्वं सौन्दर्यं दृष्ट्वा आश्चर्यम् अनुभवन् सः पृष्टवान्– "सुन्दरि! का भवती?" इति।

साधारणवेषं धृतवन्तं तं दृष्ट्वा परिहासं कर्तुम् इच्छन्ती वीणावती उक्तवती– "अहं विशालपुर्याः राजकुमारी। राज्ञ्याः निमन्त्रणस्य अनुगुणं आगता अस्मि" इति।

तदा सः युवकः– "अहम् एतस्य देशस्य युवराजः विजयकुमारः। विद्याभ्यासं समाप्य गुरुकुलात् आगच्छन् अस्मि। भवत्याः सौन्दर्यं दृष्ट्वा आकृष्टः अस्मि। यदि भवत्याः विरोधः न स्यात् तर्हि ज्येष्ठानाम् अनुज्ञां प्राप्य भवतीं परिणेतुम् इच्छामि अहम्" इति उक्तवान्।

वस्तुस्थितिं ज्ञात्वा वीणावती दिग्भ्रान्ता। सा झटिति युवराजस्य विजयकुमारस्य पादौ गृहीत्वा– "क्षन्तव्या अहम्। अहं महाराज्ञ्याः काचित् परिचारिका। महाराज्ञ्याः आभरणानि धृत्वा दर्पणे स्वसौन्दर्यं द्रष्टव्यम् इति इच्छया एवं कृतवती। भवन्तं युवराजम् अज्ञात्वा परिहासम् अपि कृतवती। अहं कृपया क्षन्तव्या" इति प्रार्थितवती।

युवराजः मन्दहासपूर्वकं– "सुन्दरि! अलं



भीत्या। अहं मृत्तिकामध्ये स्थितम् अपि माणिक्यम् अभिज्ञातुं शक्नोमि। भवती परिचारिका भवतु नाम। भवतीं परिणेतुं सिद्धः अस्मि अहम्" इति उक्तवान्।

वीणावती क्षणकालस्य मौनस्य अनन्तरं पृष्टवती– "युवराज! अहं भवन्तम् एकं प्रश्नं प्रष्टुम् इच्छामि। यदि अहं भवन्तं परिणेतुं सिद्धा न स्यां, तर्हि भवान् किं कुर्यात्?" इति।

एतं प्रश्नं श्रुत्वा आश्चर्यम् अनुभवन् युवराजः उक्तवान्– "एतस्य देशस्य भावी राजा अहम् एव यदा इच्छामि तदा का वा निराकुर्यात्? तथापि यदि भवती निराकुर्यात् तर्हि भवती अहङ्कारवती अविवेकिनी वा इति मत्त्वा अन्यां काञ्चित् सुन्दरीं

परिणेष्यामि'' इति।

तदा वीणावती– ''क्षाम्यतु युवराज! भवन्तं परिणेतुं न शक्नोमि अहम्। यतः मम विवाहः इतः पूर्वम् एव निश्चितः अस्ति'' इति उक्त्वा ततः स्वग्रामं गतवती। पूर्वम् एव अनुरागं प्रदर्शितवन्तं शिवकुमारं परिणीतवती च।

एवं कथां समाप्य बेतालः अवदत्– ''अये राजन्! वीणावत्याः प्रबला इच्छा आसीत् खलु राजकुमारः कश्चन परिणेतव्यः इति? एवं स्थिते राजकुमारः एव यदा परिणेतुं सिद्धः आसीत् तदा किमर्थं निराकरणं प्रदर्शितवती सा? सौन्दर्यास्वादकं मनः नास्ति भवत्याः इति राज्ञी यत् उक्तवती, भवत्या धैर्यवत्या भवितव्यम् इति राजा यत् उक्तवान् तत्सर्वं स्मृत्वा सा चिन्तितवती स्यात् वा– राजकुमारं परिणेतुं मम योग्यता नास्ति इति? अथवा आत्मना कृतम् अनुचितं कृत्यं युवराजः दृष्टवान् इत्यतः लज्जिता सा विवाहं निराकृतवती स्यात् वा? मम एतेषां प्रश्नानां योग्यम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरःसहस्रधा भग्नंभवेत्''इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''युवराजस्य परिणयं वीणावती निराकृतवती यत् तत्र असामर्थ्यभीतिः कारणं सर्वथा न। तया यः **प्रश्नः पृष्टः तस्य** उत्तरं राजकुमारेण यत् उक्तं तत् **श्रुत्वा** सा तदीयं परिणयं निराकृतवती। युवराजः उक्तवान् यत् भवती निराकरोति चेत् अपरां सुन्दरीं परिणेष्यामि इति। एतेन सिद्धं यत् तदीयः अनुरागः दृढः न इति। यदि सः एतां परिणयेत् तर्हि अपि कालान्तरे इतोऽपि सुन्दरी काचित् दृष्टा चेत् तां परिणीय एताम् उपेक्षया पश्येत्। अतः वीणावती युवराजस्य परिणयप्रस्तावं निराकृत्य दृढानुरागवन्तं शिवकुमारं परिणीतवती'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालःअदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# मातृऋणात् मुक्तिः

गणपतिनगरे शान्तला नाम काचित् विधवा आसीत्। तस्याः द्वौ पुत्रौ। तयोः नाम रामनाथः सोमशेखरश्चेति। विवाहितौ तौ स्वगृहे निवसतः। शान्तला षट् मासान् एकस्य पुत्रस्य गृहे, पुनः षट् मासान् अपरस्य गृहे च निवसति। ज्येष्ठः पुत्रः रामनाथः प्रभूतं धनं सम्पाद्य सुखेन निवसति स्म। कनिष्ठपुत्रः सोमशेखरः सामान्ये उद्योगे तिष्ठन् अपि कुटुम्बनिर्वहणार्थं यावदावश्यकं तावत् तु सम्पादयति स्म।

अत्रान्तरे कदाचित् शान्तला अस्वस्था जाता। सोमशेखरस्य गृहे निवसन्ती सा प्राणान् त्यक्तवती। मातुः मरणं श्रुत्वा रामनाथः सपरिवारम् अनुजस्य गृहम् आगतवान्। अश्रूणि स्रावयन् सः अनुजम् उक्तवान्– "शेखर! भवान् मातृऋणात् मुक्तः अभवत्। माता भवतः गृहे प्राणान् त्यक्तवती यत् तदेव अत्र प्रमाणम्। अहं ज्येष्ठपुत्रः खलु? मया अपि मातृऋणात् मुक्तिः प्राप्तव्या खलु? अतः मातुः अपरकर्मणां समग्रं व्ययम् अहं निर्वक्ष्यामि" इति।

एतत् श्रुत्वा बान्धवाः प्रतिवेशिनः च परस्परम् उक्तवन्तः– "साधु! पुत्रः नाम एवं भवेत्। रामनाथः योग्यः पुत्रः" इति।

अपरक्रियाः यथाविधि प्रवृत्ताः। 'अपरकर्मणः समग्रं व्ययं स्वयं निर्वहता मया मूर्खता आचरिता' इति रामनाथस्य इदानीं खेदः। किन्तु सः खेदं मनसि एव निधाय मौनम् आश्रितवान्।

द्वादशे दिने रामनाथः, सोमशेखरः, बान्धवाश्च नदीतीरं गतवन्तः। एतौ शीतलजलेन स्नातवन्तौ। पुरोहितः मन्त्रान् पठन् श्राद्धकर्माणि कारितवान्। अन्ते रामनाथः पुरोहितस्य निर्देशस्य अनुगुणं काकेभ्यः पिण्डं समर्प्य श्रद्धया भक्त्या च

नमस्कृतवान्।

समीपस्थेषु वृक्षेषु काकाः उपविश्य पिण्डं पश्यन्ति। किन्तु एकः अपि काकः पिण्डसमीपं न आगच्छति। अतः तत्र सम्मिलिताः बान्धवाः स्वनाम उक्त्वा मृतात्मानं प्रार्थितवन्तः यत् कृपया पिण्डनैवेद्यं स्वीकरोतु इति। तथापि काकैः पिण्डं न स्पृष्टम्।

अन्ते रामनाथस्य मातुलः अग्रे आगत्य उक्तवान्– "भगिनि! जनाः ज्येष्ठस्य पुत्रस्य केवलं, प्रशंसां कुर्वन्ति इति खेदः वा भवत्याः? तर्हि कनिष्ठपुत्रेण सोमशेखरेण अपि यत् कृतं तत् सर्वान् निवेदयिष्यामि। भवती कृपया इदानीम् पिण्डनैवेद्यं स्वीकरोतु" इति।

तत्समनन्तरम् एव काकाः आगत्य पिण्डपदार्थान् खादितवन्तः। तदा सर्वे आश्चर्यम् अनुभवन्तः मातुलं दृष्टवन्तः। तदा मातुलः उक्तवान्– "माता सदा अपि सर्वेषां पुत्राणां प्रगतिं कीर्तिं च इच्छति। रामनाथः मातुः उत्तरक्रियायाः व्ययं सर्वं निरूढवान्। सोमशेखरः तु ग्रामस्य अनाथालयाय शाश्वतनिधिं समर्प्य मातुः श्राद्धदिने दरिद्रेभ्यः अन्नदानव्यवस्था यथा प्रचलेत् तथा कृतवान्" इति।

एतत् श्रुत्वा रामनाथः पश्चात्तापम् अनुभवन् अनुजम् उक्तवान्– "शेखर! उत्तरक्रियायाः निमित्तं क्रियमाणस्य व्ययस्य विषये मम मनसि एव खेदः आसीत्। अतः अहं व्ययं यत् कृतवान् तत् न पूर्णेन मनसा। भवान् तु दानं कृत्वा अपि मौनम् आश्रितवान्। वस्तुतः मातृऋणात् भवान् एव मुक्तः। अहं तु अल्पः संवृत्तः" इति।

तदा सोमशेखरः उक्तवान्– "अग्रज! माता परलोके सद्गतिं प्राप्नुयात् इत्यतः भवान् व्ययं कृतवान्। मातुः नाम इहलोके स्थायि भवतु इति उद्देशेन अहं व्ययं कृतवान्। अतः भवता यत् कृतं तदपि योग्यम् एव। मातृऋणात् मुक्तिः एव आवयोः उद्देशः" इति।



अस्मद्देशीया पशुपक्षिसम्पत्—



# कच्छप्रदेशीयाः फ्लेमिङ्गोपक्षिणः

भारते केवलं दृश्यमानः कश्चन पक्षी कस्यचित् प्रदेशस्य नाम स्वनामसम्बद्धं कृतवान् अस्ति। तस्य पक्षिणः नाम 'फ्लेमिंगो' इति। तस्य नगरस्य नाम 'फ्लेमिंगोसिटी' इति, यच्च गुजरातराज्ये कच्छप्रदेशे अस्ति।

फ्लेमिङ्गोपक्षिणः वर्णः श्वेतमिश्रितः रक्तः। दीर्घौ पादौ दीर्घवक्रः कण्ठः च एतस्य वैशिष्ट्यम्। एषः आकारेण प्रायः कारण्डवेन सदृशः। औन्नत्यं च ४ द्वादशाङ्गुलम्। एतस्य दीर्घायाः रक्तचञ्च्वाः अर्धाभागः अधोमुखम् अवनतः भवति। अतः एषः जले चञ्चूं निमज्ज्य स्वकीयम् आहारं विनायासेन प्राप्नोति। एतस्य पादयोः अङ्गुलीनां मध्ये चर्मपटलं भवति। जिह्वा च चालनी इव भवति। अतः मुखं प्रविष्टं जलं निर्गच्छति, आहारः केवलः मुखे अवशिष्यते।

एते कासारसरोवरादिषु समूहरूपेण निवसन्ति। पक्षौ चालयन्तः एते आकाशे 'V' आकारेण डयन्ते यत् तत् नितरां मनोहरम्।

अक्टोबर्-मार्चमासयोः यत् अन्तरं तत्काले .कच्छप्रदेशे ५ लक्षं फ्लेमिङ्गोपक्षिणः सम्मिलन्ति। प्रपञ्चे एतदेव अद्वितीयं स्थानं यत्र च फ्लेमिङ्गोपक्षिणः अण्डानि प्रसूय सन्तानवर्धनं करिष्यन्ति।

वार्ताविषयाः बालाः–

# अत्यल्पवयस्कः गोल्फ्क्रीडापटुः शिविन्!



एवं हि श्रूयते यत् 'गोल्फ्क्रीडा' प्रभूतविराम समयवतां धनवतां क्रीडा इति। किन्तु एतादृशीषु अपि क्रीडासु कदाचित् बालाः असदृशीं प्रतिभां प्रदर्शितवन्तः दृश्यन्ते। एतादृशेषु प्रतिभावत्सु अन्यतमः शिविन्।

पञ्चवर्षीयः शिविन् कदाचित् पित्रा पेर्सिकाट्रावर्येण सह गोल्फ्क्रीडाङ्गणं गतवान्। 'विशालम् एतत् अङ्गणं धावनार्थम् अनुकूलकरम् अस्ति! धावनसमये कदाचित् पतितं चेदपि न काऽपि भीतिः। यतः भूमौ सर्वत्र मृदुला हरिततृणशय्या अस्ति! किन्तु आश्चर्यं नाम तत्र स्थिताः क्रीडापटवः लघुश्वेतकन्दुकं ताडयित्वा अपि न धावन्ति! कथम् एषा विसदृगतिः!!' इति चिन्तयति बालः। अल्पः एषः बालः मन्दं पदं स्थापयन् गत्वा अङ्गणस्थं 'रन्ध्रं' (गर्तम्) दृष्टवान्। कन्दुकपतनस्थलम् अपि परिशीलितवान्। अनयोः मध्ये यत् अन्तरम् अस्ति तत् परिशील्य जागरूकतया क्रीड्यते। अतः एव एषा क्रीडा मन्दगत्या प्रचलति इत्यपि ज्ञातवान् सः। 'मया अपि एषा क्रीडा क्रीडनीया' इति सङ्कल्पितवान् सः। तस्मात् दिनात् आरभ्य सः प्रतिदिनं पित्रा सह गोल्फ्प्राङ्गणं गन्तुम् उद्युक्तः अभवत्।

पुत्रस्य आसक्तिं जानन् पिता योग्यं क्रीडाशिक्षणं दत्तवान्। दिनेषु गच्छत्सु शिविन् गोल्फ्क्रीडानिपुणः जातः। नवमे वयसि सः अन्ताराष्ट्रियायां गोल्फ्क्रीडास्पर्धायां भागम् ऊढवान्। इण्डोनेषिया-जकार्तायां प्रवृत्तायां द्वादशयाम् 'एषिया ज्यूनियर् चाम्पियनुशिप्' स्पर्धायां पञ्चभ्यः देशेभ्यः समागताः २० बालक्रीडापटवः भागम् ऊढवन्तः। शिविन् तत्र दशमं स्थानं प्राप्तवान्।

गते वर्षे नवमी 'टैपोलिन् जूनियर् वर्ल्ड्कप् चाम्पियनुशिप्' स्पर्धा प्रवृत्ता। तत्र शिविन् भारतीयः प्रतिनिधिः आसीत्। एतस्यां स्पर्धायां भागं वोढुम् १८ देशेभ्यः बालक्रीडापटवः आगताः। तेषु अत्यल्पवयस्कः क्रीडापटुः शिविन् एव।

अतः इटलीदेशीया काचित् पत्रिका 'षिकोल्लो (अत्यल्पवयस्कः) क्रीडापटुः इति तं वर्णयन्ती तस्य प्रतिभायाः श्लाघनम् अकरोत्।

नवदेहल्यां प्रवृत्तायां त्रयोदशयाम् 'एशियाफेसिफिक् ज्यूनियर् चाम्पियनुशिप्' स्पर्धायां शिविन् रजतपदकं प्राप्तवान्। फिलिपैन्स्देशीयः जानेस् गिरोनेल्ला च प्रथमस्थानं प्राप्तवान्। तथापि शिविनस्य क्रीडाशैलीं दृष्ट्वा सर्वे सन्तुष्टाः अभवन्।

कलकत्तानगरे प्रवृत्तायां 'नेषनल् गोल्फ्चाम्पियनुशिप्' स्पर्धायां शिविन् पञ्चदशः सन् नेषनल् सब्ज्यूनियर्स्थानं प्राप्तवान्। एतत् स्थानं प्राप्तवत्सु अत्यल्पवयस्कः शिविन् एव।

# भवन्तः जानन्ति वा?

१. अस्माकं देशस्य अतिप्राचीनतरः ग्रन्थः कः?
२. परशुरामः कस्मिन् वंशे जन्म प्राप्तवान्?
३. कस्मिन् उद्याने जूदासः येसुक्रिस्तवर्यं वञ्चितवान्?
४. भारतराष्ट्रियकांग्रेसुसंस्थायाः प्राचीनं नाम किम् आसीत्?
५. कः दश वर्षाणि यावत् भारतस्य उपराष्ट्रपतिपदम् अलङ्कृतवान् आसीत्?
६. सम्राजं हर्षवर्धनं हतवान् मन्त्री कः?
७. शकसंवत्सरः कदा आरब्धः? सः कं राजानं स्मारयति?
८. पुराणेषु श्रूयते यत् महाविष्णुः कञ्चित् गजं मकरात् रक्षितवान् इति। तस्य गजस्य नाम किम्?
९. जूलियन् दिनदर्शिका केन निर्मिता?
१०. यथा उत्तरभारते 'भाईदूज्' नाम्ना कश्चन उत्सवः आचर्यते तथैव दक्षिणभारते अपि कश्चन उत्सवः आचर्यते। तस्य उत्सवस्य नाम किम्?
११. काचित् प्रसिद्धा क्रीडा पूर्वं 'पूना' नाम्ना निर्दिश्यते स्म। सा क्रीडा का?
१२. कलकत्तानगरीयाः जातिविशेषजाताः केचन कपोतक्रीडाव्यसनिनः सन्ति। ते के?
१३. हर्षचरितनामकं गद्यग्रन्थं कः लिखितवान्?
१४. 'नागार्जुनसागरबन्धः' कस्याः नद्याः सम्बन्धी?
१५. महाबलिपुरं केन निर्मितम् आसीत्?

## उत्तराणि

१. यजुर्वेदः।
२. भृगुवंशे।
३. गेत्समनेन्-उद्याने।
४. 'इण्डियन् नेषनल् यूनियन्' इति।
५. डा. एस्. राधाकृष्णन्।
६. अर्जुनः।
७. ८ शतके। कनिष्कराजम्।
८. गजेन्द्रः इति।
९. जूलियस् सीसर् यश्च क्रि.पू. ४६ तमे वर्षे मासवर्षादीनां नामकरणं कृतवान्।
१०. कनु पोंगल् इति।
११. बेट्मिण्टन्क्रीडा।
१२. चीनदेशाद् आगताः।
१३. बाणभट्टः।
१४. कृष्णानद्याः।
१५. नरसिंहवर्मणा।

# र स वा र्ताः



## अन्तरिक्षे वासः

रशियादेशीयाः व्योमगामिनः अन्तरिक्षे मासं यावत् वासं कृतवन्तः आसन्। किन्तु ततोऽपि अधिकं कालं– तन्नाम ७४० घण्टाः (३१ दिनानि) – वासं कृत्वा नूतनं विक्रमं स्थापितवान् अस्ति अमेरिकादेशीयः कमाण्डर् ब्राण्डेनस्टीनुवर्यः। एषः गते 'मे'मासे 'एण्डीवर् स्पेस् शटल्' नामकेन यानेन यानं समाप्य प्रत्यागतः। एतेन चतुर्वारम् अन्तरिक्षप्रयाणं कृतम्। इतःपूर्वं नाई थगाड्वर्यः अन्तरिक्षयाने ६०४ घण्टाः स्थितवान् आसीत्। एषः अपि चतुर्वारम् अन्तरिक्षयानं कृतवान्।

## बन्धुनगराणि

नगराणां मैत्री वर्धेत इत्याशयेन काचित् प्रक्रिया आरब्धा अस्ति। एतदनुगुणम् अमेरिकादेशस्य 'कोलोराडो'प्रदेशस्य डेन्वर्नगरस्य अष्ट बन्धुनगराणि कल्पितानि। एतादृशेषु नगरेषु अन्यतमम् अस्ति मद्रास्। डेन्वर्नगरीयाः जनाः मद्रास्नगरस्य विषये अधिकं जानीयुः इत्येतदर्थं तत्र 'डेन्वर्-मद्रास् पार्क्' निर्मीयमाणम् अस्ति।





# रक्षितः मानः

पद्मपुरनामके ग्रामे नरहरिः नाम कश्चन धनिकः आसीत्। तस्य सुविशाला भूसम्पत्तिः आसीत्। पितृपरम्परया प्राप्ता धनसुवर्णादिसम्पत्तिः अपि प्रभूता आसीत्। अतः तदीयं जीवनं सुखमयम् आसीत्।

सम्पत्तिः प्रभूता अस्ति इत्यतः नरहरेः महान् धनमदः आसीत्। निर्धनानां सामान्यानां वा सहवासं न इच्छति स्म सः। आत्मनः धनिकत्वस्य प्रदर्शनार्थं महान्तं धनव्ययं करोति स्म अपि।

कदाचित् बाल्यमित्रं श्रीहरिः नरहरेः गृहम् आगतवान्। चिरकालानन्तरं तयोः मेलनं जातम् आसीत्। अतः श्रीहरिम् आदरेण स्वागतीकृतवान् नरहरिः।

श्रीहरेः वेषभूषणस्य दर्शनतः प्राथमिकवार्तालापतः च नरहरिः ज्ञातवान् यत् श्रीहरिः दारिद्र्येण पीड्यमानः अस्ति इति। 'धनम् अन्यविधसाहाय्यं वा प्रष्टुम् एव एषः मम समीपम् आगतः अस्ति' इति निश्चितवान् सः। अतः सः श्रीहरेः आगमनकारणं न पृष्टवान् एव। प्रत्युत आत्मना कथं धनं सम्पादितम् इति, कतीनां महतां जनानां सम्पर्कः केन रूपेण साधितः इति च निरन्तरम् उक्तवान्।

श्रीहरिः सर्वं मौनं शृण्वन् आसीत्। तावता कश्चन सेवकः तत्र आगत्य एकं पत्रं नरहरये दत्त्वा प्रतिगतवान्।

तत् पत्रं पठित्वा गर्वेण हसन् श्रीहरिम् उक्तवान् नरहरिः– "पश्यतु अत्र। भूस्वामिना प्रेषितं पत्रम् एतत्। 'अद्य रात्रौ भोजनसमारम्भः अस्ति। भवता तदर्थम् अवश्यम् आगन्तव्यम्' इति सानुरोधं पत्रं प्रेषितवान् अस्ति सः" इति।

तदा श्रीहरिः हसन् उक्तवान्– "यतः



भवान् धनिकः, अतः अन्येषां धनिकानाम् आत्मीयसम्बन्धः भवतः सहजः एव। वस्तुतः तु एतस्य भूस्वामिनः समीपे मम किञ्चित् कार्यम् अस्ति। तदर्थं भवतः साहाय्यं प्राप्तुम् एव अहम् अत्र आगतवान्" इति।

"भूस्वामी तु कोट्यधीशः। तत्समीपे भवतः किं कार्यम्?" इति कुतूहलेन पृष्टवान् नरहरिः।

"कार्यं तु अल्पम्। भवद्ग्रामीणस्य भूस्वामिनः अल्पा भूमिः मम ग्रामे अस्ति। तत्र इदानीं कोऽपि कृषिं न करोति। सा भूमिः कृष्यर्थं प्राप्तव्या इति मम इच्छा। प्रतिवर्षम् अहं यथोचितं धान्यं धनं वा भूस्वामिने अर्पयामि। परिश्रमेण कृषिं करोमि च। भक्तपरतया भवान् भूस्वामिनः पुरतः एतं विषयम् उपस्थाप्य सा च भूमिः कृष्यर्थं मया यथा प्राप्येत तथा करणीयं कृपया" इति निवेदितवान् श्रीहरिः।

तदा नरहरिः गाम्भीर्येण– "मित्र! स्पष्टवचनार्थं क्षन्तव्यः अहम्। अस्माकं ग्रामस्य भूस्वामी समानास्तरीयैः सह केवलं मैत्रीं करोति। भवादृशस्य निर्धनस्य स्नेहः मम अस्ति इति यदि सः जानीयात् तर्हि मम मैत्रीम् एव तिरस्कुर्यात्। अतः भवत्परतया तं किमपि निवेदयितुम् अहं न शक्नोमि" इति उक्तवान्।

श्रीहरिः तु आत्मनः दुःस्थितिं पुनरपि निवेद्य– 'एतद्विषये अवश्यं साहाय्यं करोतु कृपया' इति दैन्येन प्रार्थितवान्।

नरहरिः तु पुनरपि निराकरणं प्रदर्श्य– "मया तु इदानीं भूस्वामिनः गृहं प्रति गन्तव्यम्। विलम्बेन तत्र गमनं न शोभते। भवान् श्वः आगच्छतु। विस्तरेण वार्तालापं करवाव" इति उक्तवान्। श्रीहरिः खेदेन ततः निर्गतवान्।

अनन्तरदिने श्रीहरिः नरहरेः गृहम् आगतवान्। तदा नरहरेः पार्श्वे अन्यः कश्चित् आसीत्। तं प्रदर्शयन् श्रीहरिम् उक्तवान् नरहरिः– "मित्र! एषः शरभेन्द्रः। अस्माकं ग्रामस्य प्रसिद्धः वणिक्, धनी च। प्रतिदिनम् अत्र आगत्य वार्तालापः कृतः चेदेव एतस्य तृप्तिः" इति।

तदा शरभेन्द्रः श्रीहरिं क्षणकालं दृष्ट्वा नरहरिं पृष्टवान्– "कः एषः? गोणीवाहकस्य एतस्य, भवतः च महती मैत्री इति भासते। कथम् एतत्? कदा एषा मैत्री जाता?" इति।

तदा आश्चर्यचकितः नरहरिः– "एतस्य नाम श्रीहरिः इति। एषः अहं च बाल्ये अभिन्ने विद्यालये पठितवन्तौ। पूर्वम् आवयोः दृढा मैत्री आसीत्। तन्मैत्रीबलात् एषः तदा तदा अत्र आगच्छति। किन्तु भवान् एतं 'गोणीवाहकः' इति कथम् उक्तवान् इति तु न ज्ञातवान् अहम्" इति उक्तवान्।

"ह्यः रात्रौ आपणं पिधाय मित्रेण प्रेषितम् आम्रफलकण्डोलद्वयं गृहं नेतुं भृत्यस्य प्रतीक्षायाम् आसम्। तावता भारयुक्तां गोणीं वहन् एषः दृष्टः। तदा अहम् एतं– 'भोः, गोणीम् अत्रैव संस्थाप्य इतः समीपस्थं मम गृहम् एतत् कण्डोलद्वयं प्रापय्य गच्छति वा?' इति पृष्टवान्। तदा एषः किमपि अवदन् मन्दहासपूर्वकं मां दृष्ट्वा अग्रे गतवान्। मया यदा साहाय्यं प्रार्थितं तदा अपि उत्तरं किमपि अवदन् प्राज्ञः इव मन्दहासं प्रदर्श्य मौनम् अग्रे गतवान् इत्यतः अहम् एतम् अभिज्ञातवान्" इति उक्त्वा पञ्चसु निमेषेषु वार्तालापं समाप्य ततः निर्गतवान् शरभेन्द्रः।

शरभेन्द्रस्य निर्गमनस्य अनन्तरं नरहरिः क्रोधेन श्रीहरिं पश्यन्– "अहो अपमाननं मम! भवत्कारणतः अद्य मम शिरः लज्जया



अवनतं जातम्। गोणीवाहकस्य भवतः स्नेहः मम अस्ति इत्येतत् लज्जास्पदम्। भवतः मुखम् अपि द्रष्टुं न इच्छामि अहम्। इतः परं कदापि मम गृहं मा आगच्छतु भवान्" इति उच्चस्वरेण उक्तवान्।

तदा श्रीहरिः मन्दहासपूर्वकम् उक्तवान्– "मित्र! तत्समये तादृशं कार्यं मम अनिवार्यम् आसीत्। भवतः अपमाननं कर्तुं न, अपि तु भवतः मानस्य रक्षणार्थम् एव मया तथा कृतम्। यतः तस्यां गोण्यां भवान् आसीत्" इति।

नरहरिः क्रोधेन– "किं वदति भवान्? गोण्याम् अहं कथं भवेयम्? किम् एतत्?" इति पृष्टवान्।

"मित्र! क्रोधः मास्तु। शान्ततया शृणोतु। ह्यः रात्रौ अहं मम ग्रामं प्रतिगच्छन् आसम्। तदा भूस्वामिनः गृहस्य पुरतः मूर्च्छां गतः मार्गे पतितः भवान् मया दृष्टः। पार्श्वे सुराकूपिका आसीत्। भवतः मुखात् असम्बद्धानि पदानि निर्गच्छन्ति स्म। दर्शनमात्रात् मया सर्वम् अवगतम्। 'एतादृश्यां स्थितौ स्थितः भवान् यदि ग्रामीणैः दृश्येत तर्हि भवतः मानः अपगच्छति' इति आलोच्य भवन्तं गोण्याम् उपवेश्य गृहं प्रापितवान्। तत्समये शरभेन्द्रः मां दृष्टवान् आसीत्। अस्तु तावत्, अहम् अत्र अपरिचितः। अतः अत्र मम मानः नष्टः चेत् न काऽपि हानिः। मित्रस्य भवतः मानः मया समये रक्षितः यत् तेन तृप्तिः मम" इति उक्तवान् श्रीहरिः।

अत्रान्तरे मन्दिरं गत्वा प्रत्यागता नरहरेः पत्नी उक्तवती– "श्रीहरिणा युक्तम् उक्तम्। यदि ह्यः सः तथा न कृतवान् स्यात् तर्हि भवान् मानहीनः अभविष्यत्। भवतः दुरवस्थां दृष्टवत्याः मम रात्रौ निद्रा एव न आगता। अतः प्रातः एव मन्दिरं गत्वा 'कुटुम्बस्य मानं रक्षतु' इति देवीं सम्प्रार्थ्य आगच्छन्ती अस्मि। लोके प्रायः सुरापानव्यसनिनः सहवासं कोऽपि न इच्छति। ह्यः रात्रौ भवान् यादृश्यां स्थितौ आसीत् तादृश्यां स्थितौ स्थितं भवन्तं यदि भूस्वामी दृष्टवान् स्यात् तर्हि सः अपि भवतः सहवासं तिरस्कृतवान् स्यात्। श्रीहरिः तु आपद्बान्धवः इव आगत्य भवतः मानं रक्षितवान्। योग्येन प्रत्युपकारेण केवलेन वयम् ऋणात् मुक्ताः स्याम" इति।

तदा नरहरिः लज्जया शिरः अवनमय्य– "मित्र! मम गर्वस्य योग्यं दण्डनं जातम्। भवान् स्वस्य अपमानम् अपि अविगणय्य मम मानं रक्षितवान्। माननाशकम् एतत् दुर्व्यसनं परित्यज्य अहम् उत्तमः भविष्यामि" इति उक्त्वा तस्मिन् एव दिने श्रीहरिं भूस्वामिनः गृहं नीत्वा परिचाय्य भूमिं कृष्यर्थं दापितवान्।





# पण्डितस्य आदरः

चन्दनपुरनामके ग्रामे कुशलः नाम कश्चन पण्डितः आसीत्। तस्मिन् ग्रामे कृषिकर्मनिरताः वाणिज्यनिरताः च जनाः अधिकाः। अतः कुशलस्य पाण्डित्यस्य अभिज्ञाता पुरस्कर्ता च कोऽपि न आसीत्। अतः कुशलः महता कष्टेन जीवननिर्वहणं कुर्वन् आसीत्। उद्योगान्तरस्य आश्रयणे आसक्तिः न आसीत् कुशलस्य। अतः सः राजतः धनसाहाय्यं प्राप्तुं राजधानीं प्रति गतवान्।

किन्तु राजधान्यां महता प्रयत्नेन अपि सः राजदर्शनं न प्राप्तवान्। तादृशे सन्दर्भे अकस्मात् पूर्वपरिचितः धिषणः मिलितः। धिषणः अपि चन्दनपुरे एव जन्म प्राप्तवान् आसीत्। सः कुशलस्य आत्मीयः अपि। दशभ्यः वर्षेभ्यः पूर्वं सः कृषिं वाणिज्यं वा कर्तुम् अनिच्छन् ग्रामतः निर्गत्य राजधानीं प्राप्तवान् आसीत्। मधुरैः वचनैः सः जनानां वशीकरणे समर्थः आसीत्। अतः सः अल्पे एव काले राजास्थाने उद्योगं प्राप्तवान् आसीत्। पुनः अचिरात् एव राज्ञः आत्मीयः जातः आसीत् अपि।

धिषणः कुशलम् उक्तवान्– "अहं राजदर्शनं कारयिष्यामि। किन्तु राज्ञः तोषणं तु भवतः कार्यम्" इति।

एतत् श्रुत्वा कुशलः नितरां सन्तुष्टः। सः धिषणस्य प्रस्तावम् अङ्गीकृतवान्।

अनन्तरदिने राज्ञः दर्शनं प्राप्तम्। राजा कुशलस्य पाण्डित्यं दृष्ट्वा नितरां सन्तुष्टः। सः कुशलम् उक्तवान्– "भवान् राजास्थाने एव तिष्ठतु" इति।

तदा कुशलः उक्तवान्– "महाराज! जन्मस्थले चन्दनपुरे एव वासः करणीयः इति मम इच्छा। अतः भवान् यदि धनसाहाय्यं



कुर्यात् तर्हि अहं ग्रामे कृषिक्षेत्रं क्रीत्वा कृषिं कुर्वन् जीवेयम्'' इति।

तदा राजा पञ्चाशत् सहस्रं सुवर्णनाणकानि दत्त्वा उक्तवान्– ''राजनीतिसम्बद्धः कश्चन ग्रन्थः मम समीपे अस्ति। चाणक्यनीतौ अपि अनुक्ताः केचन अपूर्वाः विषयाः अत्र निरूपिताः सन्ति इति विद्वांसः वदन्ति। किन्तु अत्र उपयुक्ता शैली प्रौढाः कठिना च। एतादृशीं शैलीं सामान्याः सर्वे ज्ञातुं न शक्नुवन्ति। अतः भवान् एतस्य ग्रन्थस्य व्याख्यानं सरलया शैल्या लिखतु। प्रतिफलरूपेण अहं पुनरपि पञ्चाशत् सहस्रं सुवर्णनाणकानि दास्यामि'' इति।

राज्ञः प्रस्तावम् अङ्गीकृत्य कुशलः ग्रन्थं स्वीकृत्य स्वगृहं गतवान्। तस्य गमनस्य अनन्तरं राजा धिषणम् उक्तवान्– ''मम आस्थानं प्रति आगमनानन्तरं भवता यानि कार्याणि कृतानि तेषु कुशलस्य परिचयः कारितः यत् तत् मम महते सन्तोषाय'' इति।

एतदनन्तरम् अपि राजा धिषणस्य पुरतः कुशलस्य प्रशंसां बहुधा कृतवान्।

राज्ञः एषः व्यवहारः धिषणस्य असूयायै अभवत्। 'राजा कुशलस्य विषये एवं प्रसन्नः स्यात्' इति चिन्तितं न आसीत् तेन। 'अहं दशाभ्यः वर्षेभ्यः अत्र अस्मि। जीवननिर्वहणार्थं यावत् आवश्यकं तावत् केवलं धनं सम्पादयामि अहं, न तु ततोऽपि अधिकम्। किन्तु कुशलः प्रथमपरिचय-सन्दर्भे एव पञ्चाशत्सहस्रं रूप्यकाणि प्राप्तवान्' इति आलोच्य धिषणः निर्णीतवान् यत् केनापि उपायेन राजा कुशलस्य विषये अनादरवान् यथा स्यात् तथा करणीयम् इति। अतः सः राजसमीपं गत्वा उक्तवान्– ''प्रभो, कुशलस्य परिचयः कारणीयः इति चिन्तनं बहोः कालतः पूर्वम् एव मम मनसि आसीत्। किन्तु गर्वशीलः कुशलः मम एतं प्रस्तावं निराकृतवान् आसीत्। इदानीं तु उदरम्भरणसमस्या यदा आगता तदा सः भवतः समीपम् आगतः। भवद्विषये अनादरवान् सः'' इति।

राजा सर्वं श्रुतवान्। किन्तु कामपि प्रतिक्रियां न प्रदर्शितवान्। एवम् एव षट्

मासाः अतीताः। राजा कदाचित् धिषणम् आहूय उक्तवान्– "कुशलः मया सूचितस्य ग्रन्थस्य व्याख्यानं कथं कुर्वन् अस्ति इति मया ज्ञातव्यम् इति इच्छा। भवान् वार्तां सम्प्रेष्य तम् आनाययति वा?" इति।

तदा धिषणः चिन्तितवान् यत् कुशलविषये अनादरम् उत्पादयितुम् एषः सुसमयः इति। अतः सः कुशलं प्रति कामपि वार्तां न प्रेषितवान्। दिनद्वयस्य अनन्तरं राजानं दृष्ट्वा सः उक्तवान्– "प्रभो! कुशलः वार्तां प्रेषितवान् अस्ति यत् अहम् इदानीं राजानं द्रष्टुम् आगन्तुं न शक्नोमि इति" इति।

इदानीं राजा कुशलविषये क्रुद्ध्यति इति चिन्तितवान् धिषणः। किन्तु राजा किञ्चिदपि न कुपितः। सः क्षणकालं विचिन्त्य उक्तवान्– "एतद्विषये मया एव दोषः आचरितः। एकवर्षात्मकः अवधिः मया सूचितः आसीत्। तदभ्यन्तरे कुशलस्य दृष्टेः अन्यत्र आकर्षणम् उचितं न। मया एव तस्य समीपं गन्तव्यम्। अतः श्वः एव तं द्रष्टुं गमिष्यामि अहम्" इति।

'राजा यदि स्वयं चन्दनपुरं गच्छेत् तर्हि मया यत् कृतं तत् प्रकटितं भवेत्' इति आलोच्य धिषणः– "प्रभो, अहम् एव अद्य गत्वा तं सम्यक् बोधयित्वा अत्र आनेष्यामि" इति उक्त्वा तस्मिन् एव दिने चन्दनपुरं गतवान्।

सः कुशलस्य गृहं गत्वा– "भवतः श्रेष्ठता अद्य मया ज्ञाता। महाराजः भवतः पाण्डित्यं



दृष्ट्वा आदरं यत् प्रकटितवान् तत् दृष्ट्वा अहम् असूयां प्राप्य महाराजम् असत्यम् उक्त्वा आपदं स्वयं स्वागतीकृतवान्" इति उक्त्वा प्रवृत्तं समग्रं निवेद्य प्रार्थितवान्– "इदानीम् अहं भवता एव रक्षणीयः। मया यत् कृतं तत् ज्ञातं चेत् महाराजः माम् उद्योगात् च्यावयेत्, कारागारे च स्थापयेत्" इति।

"भवतः रक्षणार्थम् एकः एव उपायः। भवान् राजसमीपं गत्वा तं वदतु यत् राजदर्शनं कर्तुम् अहं न अङ्गीकृतवान् इति। तदा भवता पूर्वं यत् उक्तं तत् वचनं परिपुष्टं भवति। अग्रे राजा किं वा कुर्यात् इति तु पश्याम" इति उक्तवान् कुशलः।

धिषणः मित्रस्य सज्जनत्वं प्रशंसन् कृतज्ञतावचनानि उक्त्वा ततः प्रस्थितवान्। यावत् सः ग्रामात् बहिः गतवान् तावता राज्ञः रथम् अभिमुखम् आगतम्।

धिषणः राजानं नमस्कृत्य उक्तवान्– "प्रभो, राजधानीम् आगन्तुं मम समयः नास्ति इति कुशलः उक्तवान्। श्रुत्वा देवः प्रमाणम्" इति।

तदा राजा हसन् उक्तवान्– "युक्तं व्यवहृतं कुशलेन। मया यत् कार्यं दत्तं तत् असमाप्य मम समीपम् आगन्तुं न इच्छति सः। भवतः कथनतः सः न आगच्छति इति जानन् अहम् एव स्वयम् अत्र आगतः" इति।

अनन्तरं राजा कानिचन दिनानि चन्दनपुरे एव स्थितवान्। कुशलेन सह ग्रन्थविषये चर्चां कुर्वन् विषयम् अवगच्छन् तृप्तिं प्राप्य राजधानीं प्रतिगतवान्।

एतत् सर्वं दृष्ट्वा चन्दनपुरवासिनः ज्ञातवन्तः यत् धिषणसदृशः राजसमीपं गत्वा बहूनि कार्याणि करोति चेदपि सर्वाणि स्वार्थदृष्ट्या एव करोति। कुशलसदृशः पण्डितः ग्रामे तिष्ठति चेत् अपि ग्रामस्य कीर्तिः सर्वत्र प्रसरति इति।

एतदनन्तरं चन्दनपुरीयाः कुशलम् आदरेण द्रष्टुम् उद्युक्ताः अभवन्। ततः आरभ्य चन्दनपुरे पण्डिताः कलाकाराः च आदरं प्राप्तवन्तः।






महोदरस्य वचनस्य अनुगुणं कुम्भकर्णः राक्षसैः सह रावणसमीपं गतवान्। राक्षसाः धावन्तः गत्वा रावणं निवेदितवन्तः– "कुम्भकर्णः निद्रातः उत्थितः अस्ति। तेन भवत्समीपम् आगन्तव्यम्, उत युद्धभूमिः गन्तव्या? यथोचितम् आज्ञापयतु भवान्" इति।

तदा रावणः सन्तोषेण झटिति आसनात् उत्थाय– "कुम्भकर्णः उत्थितवान्? अहो सौभाग्यम्! सः अत्र आगच्छतु। मया सः द्रष्टव्यः। तेन सह समालोचनं करणीयं मया। तम् अविलम्बेन अत्रैव आनयन्तु" इति उक्तवान्।

राक्षसाः प्रतिगत्य कुम्भकर्णं रावणस्य आशयं निवेदितवन्तः। कुम्भकर्णः साक्षात् रावणप्रासादं प्रति प्रस्थितवान्।

एवं प्रस्थितवन्तं भीमकायं कुम्भकर्णं प्राकारस्य बहिर्भागतः दृष्ट्वा एव भीताः केचन वानराः ततः पलायनं कृतवन्तः। कुम्भकर्णं रामः अपि दृष्टवान्। भीत्या धावतः वानरान् अपि दृष्टवान् सः। सर्वं दृष्ट्वा आश्चर्यम् अनुभवन् सः विभीषणं पृष्टवान्– "विभीषण! महामेघः इव दृश्यमानः सः कः? रावणस्य एतस्य च कीदृशं बान्धव्यम्?" इति।

तदा विभीषणः रामम् उक्तवान्– "एषः विश्रवसः पुत्रः कुम्भकर्णः। एषः युद्धे यमराजम् इन्द्रं च जितवान् अस्ति। एतस्य यः आकारः तादृशः आकारः अन्यस्य कस्यापि राक्षसस्य नास्ति। अन्ये राक्षसाः देवादीनां वरं



प्राप्य बलशालिनः जाताः चेत् एषः कुम्भकर्णः जन्मना एव पराक्रमशाली। जन्मसमनन्तरम् एव एषः बुभुक्षानिवारणार्थं सहस्रशः प्राणिनः लीलया खादितवान् आसीत्।

एतस्मात् भीताः जनाः देवेन्द्रसमीपं गत्वा सर्वं निवेद्य रक्षणं प्रार्थितवन्तः। तदा इन्द्रः क्रोधेन वज्रायुधेन कुम्भकर्णं प्रहृतवान्। तत्समये कुम्भकर्णेन यत् आक्रोशनं कृतं तत् श्रुत्वा भूलोकस्य जनाः नितरां दिग्भ्रान्ताः। कुम्भकर्णः तु क्रोधेन इन्द्रवाहनस्य ऐरावतस्य एकं दन्तम् उत्पाट्य तेन इन्द्रम् उरसि प्रस्तुम्फितवान्। तदा इन्द्रः देवैः सह ब्रह्मलोकं गत्वा कुम्भकर्णस्य दुर्व्यवहारान् ब्रह्माणं विस्तरेण निवेदितवान्।

ब्रह्मा सर्वान् राक्षसान् आहूतवान्। राक्षसानां मध्ये स्थितं कुम्भकर्णं दृष्ट्वा उक्तवान् सः– "विश्रवसः पुत्रस्य भवतः एषा लोकपीडा किं शोभते? भवन्तं निग्रहीष्यामि अहम्। अचेतनः सन् सर्वदा निद्रामग्नः भवतु भवान्" इति।

ब्रह्मणः शापवचनस्य कारणतः कुम्भकर्णः तत्रैव पतितः सन् क्षणमात्रेण निद्रावशं गतः।

एतत् दृष्ट्वा रावणः ब्रह्माणं प्रार्थितवान्– "पौत्रतुल्यः एषः शापकारणतः सदा निद्रामग्नः स्यात् इति तु उचितं न। भवतः शापवचनं व्यर्थम् अपि न स्यात्। अतः निद्रायाः जागरणस्य च अवधिं निश्चिनोतु कृपया" इति।

तदा ब्रह्मा– 'षण्मासान् यावत् एषः निद्रां करोतु। पुनः षण्मासान् यावत् जागरितः तिष्ठतु' इति उक्तवान्।

राम! भवत्तः भीतः रावणः इदानीं महता प्रयत्नेन कुम्भकर्णं जागरितवान् अस्ति। अतुलपराक्रमी कुम्भकर्णः वानरान् खादितुम् अत्र आगमिष्यति। खादने तु वडवानलः सः। वानराः तं निरोद्धुं न शक्नुवन्ति। वानराः भीताः यथा न भवेयुः तथा कर्तुं वक्तव्यं यत् एषः सञ्चारशीलः कश्चन यन्त्रमानवः इति" इति।

विभीषणस्य वचनस्य श्रवणस्य अनन्तरं



रामः नीलम् आज्ञापितवान् यत् लङ्कायाः उपरि आक्रमणं करणीयम् इति। गवाक्षः, हनूमान्, अङ्गदः इत्यादयः पर्वतशिखराणि उन्नीय युद्धार्थं सन्नद्धाः अभवन्।

अपरत्र कुम्भकर्णः तन्द्रया मन्दं गच्छन् चिन्तासागरे निमग्नं रावणं दृष्टवान्। रावणः कुम्भकर्णं दृष्ट्वा महता आनन्देन आसनात् उत्थाय प्रीत्या आलिङ्गितवान्।

निद्रा न समाप्ता इत्यतः कुम्भकर्णस्य मुखे आलस्यच्छाया कान्तिहीनता च स्फुटं दृश्यते स्म। निद्रा नष्टा इति खेदः अपि अस्ति तस्य। 'महती विपत् आगता स्यात्। अतः एव मां जागरितवन्तः स्युः। इदानीं मया कोपादिकं न करणीयम्' इति आलोच्य सः शान्ततया स्थितः आसीत्।

कुम्भकर्णेन लक्षितं यत् रावणस्य मुखे आतङ्कभावः भीतिः च स्फुटं दृश्यते इति। 'एवं तर्हि उपस्थितायाः विपदः स्वरूपं घोरम् एव स्यात्' इति निश्चितवान् कुम्भकर्णः।

उभयोः उपवेशनस्य अनन्तरं कुम्भकर्णः पृष्टवान्– "अग्रज! कीदृशी विपत् उपस्थिता? सामान्यस्य कारणस्य निमित्तं भवान् मां न जागरयति इति अहं जानामि। का सा विपत्?" इति।

तदा रावणः उक्तवान्– "कुम्भकर्ण! सामान्यात् मानवात् रामात् विपत् उपस्थिता अस्ति। सुग्रीवप्रमुखया वानरसेनया सह आगत्य सः सर्वनाशं कुर्वन् अस्ति। एतावत्पर्यन्तं प्रवृत्ते युद्धे वानरप्रमुखेषु कोऽपि हतः न अभवत्। किन्तु राक्षसवीराः च बहवः हताः अभवन्। अतः अहं भवन्तम् उत्थापितवान्। सामान्यान् वानरान् खादन्, वानरप्रमुखान् संहरन् च भवान् लङ्कां रक्षतु" इति।

एतत् श्रुत्वा कुम्भकर्णः हसन्– "अग्रज! पूर्वं समालोचनसमये यत् प्रवर्तेत इति चिन्तितम् आसीत् तदेव प्रवृत्तं खलु? इदानीं किं परितापेन? सीतापहरणस्य फलं प्राप्तम् इदानीम्। विभीषणः हितकरम् एव वचनम् उक्तवान् आसीत्। कृतं दोषं समीकर्तुम् इदानीं समयः नास्ति इति न। अतः सीतायाः प्रत्यर्पणविषये पुनरपि चिन्तयतु" इति

बोधितवान्।

रावणः तु कोपेन– "कुम्भकर्ण! वयसा ममापेक्षया अल्पः भवान् मां हितम् उपदिशति वा? उपदेशस्य दानार्थं श्रवणार्थं वा नायं समयः। पराक्रमार्थं समयः एषः" इति उक्तवान्।

तदा कुम्भकर्णः– "राक्षसराज! अहं भवतः अनुजः। अतः भवतः हितम् अनुलक्ष्य यत् उचितं तत् बोधितवान्। तत् भवतः इष्टं न। अस्तु तर्हि। भवतः चिन्तायाः निवारणे अपि मम साहाय्यम् अस्ति एव। भवान् निश्चिन्तः भवतु। रामलक्ष्मणौ मारयित्वा वानरान् दूरं प्रेषयिष्यामि। खिन्नानां राक्षसानां मुखे हासम् आनेष्यामि। यावत् अहं जीवामि तावत् रामः भवतः केशं कम्पयितुम् अपि न अर्हति। काऽपि चिन्ता मास्तु भवतः" इति धैर्यवचनानि उक्तवान्।



तदा महोदरः कुम्भकर्णं तर्जयन् उक्तवान्– "यदा रावणः सीताम् आनीतवान् तदा अस्माभिः सर्वैः सहमतिः प्रदर्शिता। कमपि अपृष्ट्वा रावणेन सीता न आनीता। इदानीं तु भवान् गर्वेण एकाकी अहं रामं लक्ष्मणं वानरसेनां च नाशयिष्यामि इति वदन् अस्ति। यः राक्षसप्रमुखान् बहून् मारयन् रावणे अपि भीतिं जनितवान् तादृशं रामम् एकाकी कथं वा हन्यात् भवान्? अस्माकम् आस्थाने किं वीराधिवीराः न आसन्? आसन् एव। किन्तु यदा ते रणरङ्गं गतवन्तः तदा रामेण हताः अभवन्। अतः रामः विनायासं मारयितुं शक्यः इति चिन्तनं कदापि मास्तु" इति।

अनन्तरं रावणं पश्यन् सः उक्तवान्– "राजन्! युद्धार्थम् अस्मान् अपि कांश्चन प्रेषयतु। यदि वयं रामं हन्तुं शक्नुयाम तर्हि वरम् एव। न शक्नुयामः चेत् प्रत्यागत्य 'रामः खादितः अस्माभिः' इति वदामः। भवान् तदा उत्सवम् आचरतु। ततः दुःखितां सीतां सान्त्वयित्वा वशीकृत्य परिणयतु। युद्धं विना एव भवतः अभीष्टं सिद्धं भविष्यति' इति।

महोदरस्य वचनं श्रुत्वा क्रुद्धः कुम्भकर्णः– "अये भीरो, अविवेकिनः भवन्तः युद्धात्



रामात् भीतः अस्ति। अतः तस्य वचनस्य विषये चिन्तनं मास्तु भवतः। भवान् इदानीं युद्धभूमिं गच्छतु। वानरान् खादतु। रामलक्ष्मणौ संहरतु। युद्धं परिसमाप्य मां तोषयतु'' इति उक्तवान्।

युद्धार्थं सन्नद्धः कुम्भकर्णः तीक्ष्णं त्रिशूलं गृहीतवान्। तच्च अयोमयं त्रिशूलम्। सुवर्णाभरणैः खचितम् अस्ति तत्। त्रिशूलं स्वीकृत्य रावणम् उक्तवान् कुम्भकर्णः– ''अहम् एकाकी एव रणरङ्गं गच्छामि। सेना अत्रैव तिष्ठतु नाम। भीतान् वानरान् खादन्, धैर्यवतां संहारं च कुर्वन् जयं प्राप्स्यामि'' इति।

''जयः भवतः एव भवतु। वानराः यथा वीराः तथा उपायचतुराः अपि। एकाकिनं भवन्तं ते वञ्चयितुम् अपि अर्हन्ति। अतः भवता सह सेना अपि भवतु'' इति उक्तवान् रावणः।

एवम् उक्त्वा रावणः कुम्भकर्णं प्रीत्या आलिङ्ग्य आशिषा अनुगृहीतवान्। रावणस्य अनुज्ञां प्राप्य ततः प्रस्थितवान् कुम्भकर्णः। शङ्खभेर्यादीनि वादयन्तः राक्षसाः तम् अनुसृतवन्तः।

मार्गे रामः राक्षसान् उक्तवान्– ''वस्तुतः मम शत्रुः रामः लक्ष्मणः च। एते पामराः वानराः यथा वने तथा अत्र सन्ति। सर्वस्य कारणीभूतौ रामलक्ष्मणौ एव संहरिष्यामि अहम्। अन्यान् वानरवीरान् तृणाय मन्ये''

भीताः सन्तः एव वदन्ति। वीरः कदापि वचनेषु भीतिं न प्रकटयेत्। भीरवः भवादृशाः सन्ति इत्यतः एव रावणेन एतावत्पर्यन्तम् अपजयः प्राप्तः आसीत्। राजसभायां राजा यद्यत् वदति तत्सर्वं करताडनपूर्वकं प्रोत्साहयन्तः अङ्गीकारं च प्रदर्शयन्तः स्थितवन्तः भवन्तः। योग्यं मार्गदर्शनं करणीयम् इति भवत्सु केनापि न चिन्तितम्। आमोद-भोगादिषु आसक्तिं प्रदर्शयन्तः भवन्तः राजानम् अपि तथैव प्रेरयन्तः धनागारं रिक्तीकृतवन्तः। अस्तु तावत्। भवद्भिः कृतं दोषम् अहं मार्जयिष्यामि'' इति उक्तवान्।

तदा रावणः उच्चैः हसित्वा– ''महोदरः

इति।

एवं सगर्वं बहुविधवचनानि वदन् अट्टहासं प्रदर्शयन् रणरङ्गम् आगतवान् कुम्भकर्णः। कुम्भकर्णस्य आकारं दृष्ट्वा गर्जनं च श्रुत्वा प्रहारं च प्राप्य वानराः पलायनं कृतवन्तः। एतेन कुम्भकर्णस्य उत्साहः द्विगुणितं प्रवृद्धः।

पलायनरतान् वानरान् दृष्ट्वा उक्तवान् अङ्गदः– "भो भोः, वानरवीराः! स्वसामर्थ्यं, पराक्रमं, कुलगौरवं च विस्मृत्य पलायनं कुर्वन्तः सन्ति खलु भवन्तः? शत्रवे यः पृष्ठं प्रदर्शयति सः किं शूरः? अलम् अविवेकेन। युद्धोद्यताः भवन्तु भवन्तः। पुरतः दृश्यमानः न मानवः, अपि तु भीतिजननार्थं राक्षसैः निर्मितं यन्त्रम्। वयं तत् नाशयाम। धैर्येण आगच्छन्तु सर्वे अग्रे" इति।

अङ्गदस्य वचनं श्रुत्वा धैर्यं प्राप्य वानराः वृक्षान्, शिलाः च उन्नीय प्रत्यागताः। प्राणहानिम् अपि अविगणय्य युद्धं कृतवन्तः ते। पर्वताकारः कुम्भकर्णः वानराणां प्रहारं तृणाय मन्यमानः निश्चलः आसीत्। सः अट्टहासं कुर्वन् लीलया वानराणां संहारे उद्युक्तः अभवत्।

कुम्भकर्णेन यदा प्रहरणम् आरब्धं तदा वानराणां धैर्यं नष्टं जातम्। अतः ते पलायनम् आरब्धवन्तः। केचन धावन्तः समुद्रे पतितवन्तः। अन्ये केचन आकाशम् आश्रितवन्तः। इतरे केचन सेतुमार्गेण दूरं



धावितवन्तः।

'धावनं मास्तु' इति अङ्गदस्य वचनम् अकिञ्चित्करं जातम्। "सहस्रशः वानराः एकस्मात् राक्षसात् भीताः भवन्ति इति तु लज्जास्पदम् एतत्" इति भर्त्सितवान् अङ्गदः। तथापि राक्षसाः पलायनरताः एव दृश्यन्ते। हनूमान् अपि वानराणां प्रोत्साहने उद्युक्तः जातः। तथापि परिणामः तु शून्यः एव।

तदा हनूमान् एव सेनानायकत्वं निर्वहन्, ऋषभः, मैन्दः, धूम्रः, नीलः, कुमुदः, सुषेणः, गवाक्षः, रम्भः, तारः, द्विविदः, पनसः, इत्यादिभिः वानरप्रमुखैः सह युद्धार्थम् अग्रे गतवान्। ते सर्वे युद्धे प्राणान् अर्पयितुम् अपि सिद्धाः एव।

कुम्भकर्णः तु वानरान् खादन् अस्ति। द्विविदः एकं पर्वतम् उन्नीय कुम्भकर्णम् अभिलक्ष्य बलात् क्षिप्तवान्। स च पर्वतः कुम्भकर्णस्य पार्श्वे पतितः। तस्य पतनतः बहवः राक्षसाः, रथाः, अश्वाः चापि धूलिसात् जाताः। द्विविदः अपरं पर्वतम् उन्नीय राक्षसानाम् उपरि पातितवान्। एतेन अपि बहवः राक्षसाः मृताः। रथारूढाः राक्षसाः वानराणां संहारे रताः सन्ति। वानराः अपि महावृक्षादीन् उन्नीय राक्षसानां संहारं कुर्वन्तः सन्ति।

हनूमान् आकाशमार्गम् आश्रित्य ततः कुम्भकर्णस्य उपरि विविधान् वृक्षान् शिलाः च निरन्तरं पातितवान्। कुम्भकर्णः तु त्रिशूलस्य साहाय्येन ताः शिलाः चूर्णीकृत्य वृक्षान् पार्श्वे पातितवान्। अनन्तरं त्रिशूलम् उन्नीय वानरसेनायाः संहारे उद्युक्तः अभवत् च। तदा हनूमान् एकं पर्वतशिखरम् उत्पाट्य कुम्भकर्णस्य उपरि क्षिप्तवान्।

कुम्भकर्णस्य शरीरात् रक्तं धाराकारेण प्रवहति। सः नितरां क्रुद्धः अस्ति। क्रोधेन सः त्रिशूलम् उन्नीय हनूमतः उरसि बलात् प्रहृतवान्। तदा हनूमान् उच्चैः आक्रन्दनं कृतवान्। तस्य मुखात् रक्तं निर्गतम्। सः मूर्छां गतः सन् अधः अपतत्।

नीलः कुम्भकर्णस्य उपरि अपरं पर्वतं पातितवान्। कुम्भकर्णः तु तं पर्वतं मुष्ट्या निवार्य चूर्णीकृतवान्। तदा ऋषभः, शरभः, नीलः, गवाक्षः, गन्दमादनः इत्येते पञ्च वानरवीराः सम्भूय कुम्भकर्णस्य उपरि आक्रमणं कृतवन्तः। पाषाणान्, पर्वतान्, महावृक्षान् च कुम्भकर्णस्य उपरि निरन्तरं पातितवन्तः। मुष्टिप्रहारेण पादप्रहारेण चापि तं सम्यक् पीडितवन्तः। कुम्भकर्णः तु एतादृशीम् अपि पीडां मशकदंशनम् इव लीलया सहते। सः झटिति परिवृत्य एकैकम् अपि वानरवीरं गृहीत्वा सम्यक् प्रहृतवान्। एतस्य कारणतः ते पञ्च अपि वीराः क्रन्दनं कुर्वन्तः रक्तं वमन्तः मूर्च्छां गताः सन्तः भूमौ पतितवन्तः।





# पादरक्षायोगी

चन्द्रसेननामकस्य राज्ञः आस्थाने हासभूषणः नाम विदूषकः आसीत्। विदूषकस्य अपूर्वं चातुर्यम्। विदूषकविषये सन्तुष्टः राजा कदाचित् उक्तवान्– "भवान् यत् इच्छति तत् दास्यामि। का अपेक्षा इति वदतु तावत्" इति।

तदा हासभूषणः विनयेन– "प्रभो, विदूषकस्य जीवनम् असिधाराव्रतम् इव। अतः यदा आवश्यकता तदा वरं स्वीकरिष्यामि। इदानीं किमपि मास्तु" इति। राजा अस्तु इति उक्तवान्।

चन्द्रसेनराजस्य पुत्रः रुद्रसेनः। रुद्रसेनः मातापितृभ्यां महत्या प्रीत्या लालितः आसीत्। शिक्षणार्थं सः गुरुकुलं प्रेषितः। गुरुकुले यदा गुरुः किमपि अप्रियं वदति तर्जयति वा, तदा रुद्रसेनः राजधानीम् आगच्छति स्म। द्वित्राणां दिनानाम् अनन्तरं राजा गुरुकुलं प्रतिप्रेषयति स्म। राजकुमारं कठोरं दण्डयितुं, राजधानीं पुनः पुनः मा गच्छतु इति वक्तुं वा गुरोः धैर्यं नास्ति। राजा कुपितः भवेत् इति भीतिः तस्य।

चन्द्रसेनस्य पुत्रविषये वात्सल्याधिक्यं, सत्यम्। तथापि पुत्रस्य अध्ययनं सम्यक् न प्रचलति इति खेदः तु तं बाधते स्म। कदाचित् सः स्वस्य मनोव्यथां विदूषकं निवेदितवान्।

तदा विदूषकः उक्तवान्– "राजकुमारस्य किम्? यदा इच्छा तदा राजप्रासादे वासः। अतः मातापित्रोः अपरिमितं वात्सल्यं प्राप्नोति सः। गुरुकुले अध्ययनम् अपि प्रचलति एव। सुखी सः" इति।

"किं सुखम्? गुरोः वचने अल्पा तीक्ष्णता दृष्टा चेदपि सः प्रासादं प्रत्यागमिष्यति। अतः सः महत् दौष्ट्यम् आचरति चेदपि, अध्ययनं सम्यक् न करोति चेदपि दण्डनं न प्राप्नोति।

"भामहः"



भवन्तं कारागारे स्थापयिष्यामि" इति क्रोधेन उक्तवान् राजा।

तदा विदूषकः विनयेन— "प्रभो, अज्ञानात् किमपि उक्तम्। क्षन्तव्यः अहम्" इति प्रार्थितवान्। तदा राज्ञः कोपः चतुर्गुणितं प्रवृद्धः। अन्ते विदूषकः राज्ञा पूर्वं दत्तं वरं स्मारयित्वा— "यदि अहं दण्डनीयः एव इति भवतः आशयः तर्हि तदपि भवतु। किन्तु दण्डनप्रमाणे न्यूनता भवतु। देवालयम् आगच्छतां जनानां पादरक्षामार्जने मां नियोजयतु। एतेन ममापि किञ्चित् तृप्तिः, भवतः अभीष्टस्य अपि सिद्धिः। दण्डनार्थम् अहं तत्र स्थापितः इति तु कमपि मा वदतु" इति प्रार्थितवान्।

अत्र वयं तं मधुरैः वचनैः बोधयित्वा पुनः प्रेषयामः। पुत्रः कथं परिष्करणीयः इत्येव न ज्ञायते मया" इति खेदेन उक्तवान् राजा।

"प्रभो, धनसम्पत्तिः, प्रभुत्वम्, अविवेकिता इति एतेषु एकैकम् अपि अनर्थकारकम्। त्रयम् अपि अस्ति चेत् अनर्थपरम्परा एव सम्भवति। एतादृशस्य बोधनेन किम्? सिकताभ्यः तैलं प्राप्तुं शक्येत, शशशृङ्गम् अपि अन्वेष्टुं शक्येत। किन्तु मूर्खं सन्मार्गे आनेतुं कोऽपि न शक्नोति" इति उक्तवान् विदूषकः।

एतत् श्रुतवतः चन्द्रसेनस्य महान् कोपः आगतः। "भोः, मम पुत्रं मूर्खशिखामणिं वदति वा भवान्? कियत् औद्धत्यं भवतः?

पादरक्षामार्जनं तु अपमानकरं कार्यम्। अतः एतत् एव दण्डनं भवितुम् अर्हति इति निश्चित्य राजा अङ्गीकारं सूचितवान्।

अनन्तरदिने एव विदूषकः देवालयस्य पुरतः उपविश्य देवालयसमीपे अटतः जनान् उक्तवान्— "भो भो आर्याः, देवालयम् आगच्छतां जनानां पादरक्षां मार्जयिष्यामि इति मया सङ्कल्पः कृतः। एतादृशं कार्यं कृत्वा अहङ्कारभावः दूरीकरणीयः इति मम इच्छा। कृपया भवन्तः सहकुर्वन्तु" इति।

आरम्भे केचन तस्य उपहासं कृतवन्तः। किन्तु विदूषकः एतत् अविगणयन् सर्वेषां पादरक्षां मार्जयति स्म। सदा शुचिः सन् गीतापारायणम् अपि करोति स्म।

धनिकनिर्धनभेदं न गणयति स्म। सदा विनयेन व्यवहरति स्म।

अतः केषुचित् एव दिनेषु बहवः तद्विषये आदरवन्तः जाताः। मार्जितायाः पादरक्षायाः स्वीकारसमये केचन कृतज्ञतापूर्वकं नमस्कृतवन्तः। अन्ये केचन परमभक्ताः तं साष्टाङ्गं नमस्कृतवन्तः। एवं जनानाम् आदरं प्राप्नुवन् सः 'पादरक्षायोगी' इति ख्यातः अभवत्। 'येषां पादरक्षां सः मार्जयति तेषाम् अभीष्टं सिध्यति' इत्यपि वार्ता प्रसृता। अतः तस्य कीर्तिः सर्वत्र व्याप्ता अभवत्।

'कश्चन पादरक्षायोगी मन्दिरसमीपे अस्ति' इति वार्ता राज्ञा श्रुता। सः कुतूहलेन एतस्य विशिष्टस्य योगिनः दर्शनार्थम् आगतवान्। विदूषकः एव सः योगी इति ज्ञातवतः तस्य महत् आश्चर्यम्!

विदूषकः राज्ञः पादरक्षां मार्जयित्वा सर्वान् पश्यन् उक्तवान्– "अद्य मम व्रतं समाप्तम्। मम स्थाने कोऽपि उपवेष्टुम् इच्छति चेत् अग्रे आगच्छतु" इति।

तदा अहमहमिकया बहवः अग्रे आगतवन्तः। तदा तेषु एकं चित्वा पादरक्षायोगिस्थाने उपवेश्य– "यदा अहङ्कारः गतः इति भवान् चिन्तयति तदा अन्यम् अत्र उपवेश्य गच्छतु" इति उपदिश्य राज्ञा सह राजप्रासादं गतवान् विदूषकः।

तत्र राजा विदूषकम् आश्चर्येण पृष्टवान्– "मया कोपेन पादरक्षामार्जनरूपः दण्डः विहितः। किन्तु भवान् योगी कथं सञ्जातः?" इति।



तदा विदूषकः मन्दहासपूर्वकम् उक्तवान्– "यदि ऋषिः कश्चन अधोमुखं तिष्ठति तर्हि तत् तपः इति उच्यते। चोरेण तथा क्रियमाणं दृष्ट्वा दण्डः इति उच्यते। एवं समयानुगुणम् उत्तमम् अधमं वा फलं सिद्ध्यति। भवान् दण्डः इति अनुद्घोष्य यस्मिन् कस्मिंश्चित् कार्ये मां नियोजयतु, अहं गौरवं प्राप्स्यामि। पादरक्षामार्जनं दण्डरूपेण विहितम् इति यदि भवान् प्रचारम् अकरिष्यत् तर्हि जनाः थूत्कुर्वन्तः मां पाषाणखण्डैः अताडयिष्यन्। किन्तु दण्डः इति घोषणं न कृतम् इत्यतः जनाः मां योगी इति पूजितवन्तः" इति।

"तदस्तु। एतादृशे कार्ये उद्युक्तस्य भवतः कः आशयः इति न ज्ञातं मम। आशयं विवृणोतु तावत्" इति उक्तवान् राजा।

"प्रभो! लालने बहवो दोषाः इति प्राचीनाः वदन्ति। यदा दोषः क्रियते तदा तदनुगुणं दण्डः दातव्यः। दोषसमये दण्डः न दत्तः चेत् परिष्कारः न भवति। दण्डदानेन युवराजस्य अल्पः खेदः भवेत् नाम, किन्तु तत् तेन सोढव्यम्। विना कारणं यदा सः राजभवनं प्रत्यागच्छति तदा एतत् अनुचितम् इति बोधयित्वा झटिति गुरुकुलं प्रति प्रेषणीयम्। दोषकरणप्रवृत्तिः कदापि न प्रोत्साहनीया। दण्डः परिष्कारार्थं विधीयते। स च प्रकटं विधातव्यः। तदा एव तस्य परिणामः" इति उक्तवान् विदूषकः।

राजा चन्द्रसेनः क्षणकालम् आलोच्य– "भवता सत्यम् एव उक्तम्। दोषी अवश्यं दण्ड्येत। स च दण्डः च प्रकटतया विधातव्यः। तदा एव तस्य फलं सिद्ध्यति। अतः गुरुकुलस्य आचार्यम् अद्यैव वदामि यत् राजकुमारः यदा दोषं करोति तदा सर्वेषां पुरतः एव दण्डविधानं भवतु इति" इति उक्तवान्। विदूषकं योग्यस्य पुरस्कारस्य दानेन सत्कृतवान् च।

पुनः अचिरात् एव राजकुमारे परिवर्तनं जातम्। सः सम्यक् अध्ययनं कृत्वा कालान्तरे उत्तमः राजा इति कीर्तिं प्राप्तवान्।





# अनक्षरज्ञःसामन्तः

स्पेन्देशे पूर्वं कश्चन सामन्तराजः आसीत्। सः अनक्षरज्ञः। तस्य प्रभूता सम्पत्तिः आसीत्। अतः सः चिन्तयति स्म— 'पठनलेखनसामर्थ्यस्य का आवश्यकता? धनं दत्तं चेत् शिक्षिताः उद्योगिनः प्राप्यन्ते एव। अतः मया परिश्रमेण पठनं लेखनं च ज्ञातव्यं नास्ति' इति।

पठनलेखनादिसाहाय्यार्थं सामन्तः एकं निर्धनम् उद्योगित्वेन नियोजितवान्। यत्र यत्र सः गच्छति तत्र सर्वत्र तं लेखकं नयति स्म सः। एवं कदाचित् युद्धार्थम् अपि तं नीतवान् सः।

एषः लेखकः प्रतिदिनं युद्धस्य विवरणेन युक्तं पत्रं सज्जीकरोति स्म। सामन्तः पत्रे लिखितं श्रुत्वा मुद्राम् अङ्कयित्वा दूतद्वारा राजधानीं प्रेषयति स्म। एवं दिनानि गच्छन्ति स्म।

किन्तु दौर्भाग्यवशात् युद्धसमये एव सः लेखकः दिवङ्गतः। युद्धक्षेत्रे अन्यस्य लेखकस्य प्राप्तिः कष्टकरी एव खलु? एवं कष्टे प्राप्ते अपि 'अध्ययनं करणीयम्' इति सामन्तः न चिन्तितवान्। 'पठनलेखनादिकं सामान्यस्य कर्मकरस्य कार्यम्। अहं तु सामन्तराजः सामन्तस्य मादृशस्य योग्यं न' इति भावयति स्म सः।

एतस्मिन् एव काले कदाचित् कश्चन राजदूतः सामन्तस्य समीपम् आगतवान्। सः राज्ञः एकं पत्रं सामन्ताय दत्त्वा किमपि अनुक्त्वा अश्वम् आरुह्य प्रतिगतवान्। राज्ञा प्रेषिते पत्रे कः विषयः अस्ति इति न ज्ञातवान् सामन्तः। स्वयं तु पठितुं न जानाति खलु सः? 'युद्धम् अग्रे अनुवर्तनीयम् इति राजाज्ञा अस्ति उत युद्धं स्थगनीयम् इति' इति न ज्ञातवान् सामन्तः।

किं करणीयम् इति यावत् सः चिन्तयन् आसीत् तावता तत्र कश्चन सैनिकः

"स्पेन्देशीया जानपदकथा"



आगतवान्। सः पठितुं लेखितुं च समर्थः आसीत्। तं स्वसमीपम् आहूय उक्तवान्— "भोः, एतस्मिन् पत्रे किं लिखितम् अस्ति इति पठित्वा वक्तव्यं भवता। अत्र यः विषयः अस्ति तम् अन्यः कोऽपि न जानीयात्। अतः अन्यः कोऽपि न वक्तव्यः भवता। पत्रे यत् अस्ति तदेव वदतु। मिथ्यां वदति चेत् भवतः दन्तान् भञ्जयिष्यामि" इति।

पूर्वं कदाचित् अल्पस्य दोषस्य निमित्तम् एतं सैनिकं कशया सम्यक् ताडितवान् आसीत् एषः सामन्तः। तत् प्रकरणं सामन्तः विस्मृतवान् आसीत् चेदपि सः सैनिकः तु सम्यक् स्मरति स्म। सामन्तविषये तस्य मनसि कोपः आसीत्।

अतः सः पत्रं पठित्वा— "श्रीमन्! अप्रिया वार्ता अस्ति अत्र। कश्चित् महाराजं सूचितवान् अस्ति यत् भवान् राजद्रोहम् आचरितवान् अस्ति इति। अतः त्वरया राजधानीं प्रति आगन्तव्यम् इति आज्ञां कृतवान् अस्ति राजा" इति उक्तवान्।

"कः सः मां राजद्रोहिणम् उक्तवान्? तस्य शिरच्छेदः करणीयः। परमनीचः सः" इति क्रोधेन उक्तवान् सामन्तः।

राजाज्ञा न उपेक्षणीया खलु? अतः सामन्तः तस्मिन् एव दिने ततः प्रस्थितवान्। राजधानी तु सुदूरे अस्ति। प्रयाणसमये रात्रिः जाता। समीपे कुत्रापि ग्रामः गृहं वा न आसीत्। अतः सामन्तः अश्वात् अवतीर्य कस्यचित् वृक्षस्य अधः शयनं कृतवान्। प्रातःकालः यदा जातः तदा तेन मार्गस्य पार्श्वे फलकं किमपि दृष्टम्। अनक्षरज्ञः सामन्तः फलके किं लिखितम् अस्ति इति न जानाति। निधिसूचकं किमपि स्यात् इति आलोच्य सः परीक्ष्य ज्ञातुं फलकस्य समीपं गतवान्। पादस्खलनात् पार्श्वस्थे गर्ते पतितवान् च।

फलके लिखितम् आसीत् यत्— "केनापि एतत्समीपं न आगन्तव्यम्" इति। पतनात् महतीं वेदनां प्राप्तवान् सामन्तः। शरीरे तत्र तत्र व्रणाः। वस्त्रादिकं छिन्नम्। दीर्घकालं यावत् प्रयत्नं कृत्वा कथमपि गर्तात् बहिः आगतवान् सामन्तः। वेदनां सहमानः एव समीपग्रामस्य धर्मशालायां वासं कृतवान्।

तस्याम् एव धर्मशालायां कश्चन दुष्टः वणिक् अपि आसीत्। विविधैः उपायैः अन्यान् पीडयित्वा स्वयं सन्तोषम् अनुभवति स्म सः। तादृशं वणिजं स्वसमीपम् आहूय प्रवृत्तं समग्रं निवेद्य उक्तवान् सामन्तः– "भोः, दैवेन प्रेषितः इव भवान् अद्य मिलितः। पश्यति खलु भवान् मम दुःस्थितिम्? एतादृश्यां स्थितौ, अहं कथं वा महाराजस्य पुरतः स्थातुं शक्नुयाम्? यदा वेदना अपगमिष्यति तदा आगमिष्यामि इति पत्रे लिखित्वा ददातु कृपया" इति।

'परपीडार्थम् एषः युक्तः समयः' इति आलोच्य सः दुष्टः वणिक् रूक्षैः शब्दैः राजनिन्दकानि वचनानि लिखित्वा सामन्ताय दत्तवान्। सामन्तः तत्र स्वस्य मुद्राम् अङ्कयित्वा तत् पत्रं राजधानीं प्रेषितवान्।

महाराजः पत्रे लिखितं पठित्वा क्रुद्धः सन्– "अहो दुष्टता एतस्य! एतम् एतत्क्षणे एव बद्ध्वा आनीय कारागारे स्थापयन्तु" इति भटान् आज्ञापितवान्।

भटाः सामन्तं बद्ध्वा नीत्वा कारागारे स्थापितवन्तः। दुरभिमानकारणतः सामन्तः स्वस्य निर्दोषित्वं न प्रतिपादितवान्, राजानं क्षमां न प्रार्थितवान् वा।

राजा सामान्तद्वारा कठिनानि कार्याणि प्रतिदिनं कारयति स्म। अल्पं निस्सारम् आहारं ददाति स्म। तथापि गर्वयुक्तः एषः सामन्तः 'क्षमाप्रार्थनम् अपमानकरम्' इति



भावयन् मौनम् आश्रितवान्।

अन्ते राजा– 'उद्धतस्य दुष्टस्य एतस्य शिरच्छेदः कारणीयः' इति आलोच्य न्यायाधीशम् आनायितवान्।

प्रवृत्तं सर्वं ज्ञात्वा उक्तवान् न्यायाधीशः– "प्रभो, सर्वस्य परिशीलनतः मम तु भासते यत् एषः अनक्षरज्ञः स्यात् इति। पत्रे किं लिखितम् इति अज्ञात्वा एषः मुद्राम् अङ्कितवान् स्यात्। गर्वकारणतः अविधेयतां प्रदर्शितवान् एषः इति तु सत्यम्। किन्तु तदर्थम् एतावता एव एतेन कठोरः कारागारवासः अनुभूतः एव. पुनः शिरश्च्छेदनदण्डः अनुचितः एव स्यात्। दोषपरिमार्जनार्थम् एकः अवकाशः दत्तः चेत्

युक्तं स्यात् इति भासते मम" इति।

तदा पार्श्वस्थः कश्चन राजोद्योगी उक्तवान्– "प्रभो, एषः पठितुं लेखितुं वा न जानाति इति जनाः वदन्ति स्म" इति।

"कथम् एतत्? उच्चराजकुले जातः अहम् एव पञ्चषाणि वर्षाणि परिश्रमं कृत्वा विद्याभ्यासं कृतवान् अस्मि। एषः दुष्टः सामन्तः किं तावदपि कर्तुं न शक्नोति? आश्चर्यकरम् एतत्। एषः अनक्षरज्ञः इति सप्रमाणं निरूपयतु तावत्" इति उक्तवान् राजा।

न्यायाधीशः– 'अहम् अपराधी। अतः मरणदण्डनविधानम् अहम् अङ्गीकरोमि' इति एकस्मिन् पत्रे लिखित्वा तत् पत्रं नीत्वा कारागारस्थाय सामन्ताय दत्तवान्।

"अस्मिन् पत्रे किं लिखितम् अस्ति इति भवान् एव पठित्वा वदतु" इति उक्त्वा पत्रं न्यायाधीशाय दत्तवान् सामन्तः।

"भवान् निर्दोषी इति, भवद्विषये कृतः आरोपः मिथ्या इति च पत्रे लिखितम् अस्ति" इति शान्तस्वरेण उक्तवान् न्यायाधीशः।

एवं वा? तर्हि अहम् अत्र अङ्गीकारमुद्राम् अङ्कयामि" इति उक्त्वा मुद्राम् अङ्कितवान् सामन्तः।

सर्वं ज्ञात्वा राजा सामन्तं कारागारात् मोचितवान्। "भोः, अनक्षरज्ञत्वम् अपराधाय। तथापि दयया अहं भवन्तं क्षान्तवान् अस्मि। षण्मासाभ्यन्तरे भवान् पठितुं लेखितुं च सामर्थ्यं न प्राप्नोति चेत् भवन्तं सामन्तपदवीतः च्यावयिष्यामि। अतः प्रथमं विद्याभ्यासं करोतु" इति बोधयित्वा प्रेषितवान् च।

दुष्टः सैनिकः, दुष्टः वणिक् च राज्ञा कारागारे स्थापितौ। अक्षरज्ञानस्य महत्त्वं स्वानुभवात् ज्ञातवान् सामन्तः योग्यं गुरुम् आश्रित्य पठितुं लेखितुं च सामर्थ्यं सम्पादितवान्। तावदेव न, केषुचित् एव वर्षेषु शास्त्रपाण्डित्यम् अपि सम्पादितवान्।

'इदानीम् उत्तमः सामन्तः भवान्' इति तस्य श्लाघनं कृतवान् महाराजः।





# आतिथ्यम्

बाणाकरपुरनामके नगरे कमलानाथः नाम कश्चन वणिक् आसीत्। तस्य बहुविधं वाणिज्यम् आसीत्। प्रतिदिनं रात्रौ तस्य दिनस्य लाभं सम्यक् गणयित्वा कपाटिकायां स्थापयित्वा कीलयति स्म सः।

कदाचित् रात्रौ लाभरूपेण प्राप्तं धनं गणयन् आसीत् कमलानाथः। तावता द्वारताडनशब्दः श्रुतः। तदा कमलानाथः कटस्य उपरि स्थापितस्य धनस्य उपरि एकं वस्त्रं प्रसार्य द्वारम् उद्घाटितवान्।

द्वारस्य पुरतः रामनाथः स्थितः आसीत्। रामनाथः कमलानाथस्य दूरबन्धुः आत्मीयः च। रामनाथः साक्षात् प्रकोष्ठं प्रविष्टवान्। कमलानाथेन धनस्य उपरि यत् वस्त्रं प्रसारितं तस्य पार्श्वे उपविष्टवान् च। कमलानाथः इदानीं किमपि कर्तुं वक्तुं वा अशक्नुवन् पृष्टवान्— "मित्र! एवं मध्यरात्रे किमर्थम् आगतम्?" इति।

तदा रामनाथः उक्तवान्— "मित्र! श्वः प्रातःकाले मया कस्मैचित् पञ्चाशत् रूप्यकाणि दातव्यानि। अतः इदानीं भवत्सकाशम् आगतवान्। भवान् अवश्यम् आत्मीयस्य मम साहाय्यं करिष्यति इत्यत्र विश्वासः अस्ति मम" इति।

क्षणकालं यावत् कमलानाथस्य मुखात् किमपि न निर्गतम्। अनन्तरम् उक्तवान् सः— "मित्र! किं करवाणि, असहायः संवृत्तः अस्मि। एषु दिनेषु वाणिज्ये मया महती हानिः अनुभूता। अद्य तु वाणिज्येन पञ्चरूप्यकात्मकः अपि आयः न प्राप्तः। कथं साहाय्यं कुर्याम्?" इति।

किन्तु रामनाथः मौनं न स्थितवान्। "भवता यावत् उच्यते तावतीं वृद्धिं दास्यामि मित्र! ऋणं नास्ति इति मा वदतु कृपया" इति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

अनुरोधपूर्वकं प्रार्थितवान् सः। तावता वातायनतः वायुः वेगेन आगतः। प्रकोष्ठस्थः दीपः निर्विण्णः अभवत्। तत्र सर्वत्र अन्धकारः प्रसृतः।

तदा कमलानाथः रामनाथस्य हस्तौ गृहीत्वा उक्तवान्– "मित्र! क्षन्तव्यः अहम्। साहाय्यं करणीयम् इति इच्छा अस्ति चेदपि आनुकूल्यं नास्ति। अहम् एव ऋणं स्वीकृतवान् अस्मि। क्षन्तव्यः अहम्" इति।

तदा रामनाथः उक्तवान्– "अस्तु, हस्ते धनं नास्ति चेत् भवान् वा किं कुर्यात्? अन्यतः कुतश्चित् ऋणं प्राप्तुं प्रयत्नं करिष्यामि। आगच्छामि तावत्" इति।

किन्तु कमलानाथः तस्य हस्तौ अत्यजन्– "मित्र! चिरात् आगमनं भवतः। अद्य भोजनं कृत्वा एव गन्तव्यम्" इति प्रार्थितवान्।

रामनाथः उक्तवान् यत् मम भोजनं समाप्तम् इति। किन्तु कमलानाथः रामनाथस्य हस्तौ अत्यजन् पुनः उक्तवान्– "मित्र! एवं मा वदतु। मम सन्तोषार्थम् अद्य अत्र भवता भोजनं करणीयम् एव" इति।

अत्रान्तरे कमलानाथस्य पत्नी दीपं ज्वालयित्वा तत्र आगतवती। तदा कमलानाथः रामनाथस्य हस्तौ त्यजन् उक्तवान्– "मित्र! भवता अन्यतः कुतश्चित् ऋणं प्राप्तुम् इदानीम् एव प्रयत्नः करणीयः खलु? अस्तु, तर्हि, भवान् गच्छतु तावत्। पुनः कदाचित् मिलित्वा भोजनं करवाव" इति।

"पुनः मिलाम तावत्" इति उक्त्वा ततः निर्गतवान् रामनाथः।

कमलानाथस्य पत्नी न ज्ञातवती यत् पतिः किमर्थं रामनाथस्य हस्तौ गृहीत्वा 'भोजनं कृत्वा एव गच्छतु' इति वदन् अस्ति इति। पत्न्या पृष्टः कमलानाथः हसन् उक्तवान्– "अये! दीपः तु निर्विण्णः अभवत्। वस्त्रस्य अधः धनम् आसीत्। सः धनं स्वीकर्तुं हस्तं प्रसारयेत् इति भीत्या अहं तस्य हस्तौ दृढं गृहीतवान् आसम्" इति।

पत्युः वचनं श्रुत्वा मन्दं हसितवती पत्नी।



# प्रकृतिवैचित्र्याणि –

## नीलानि पाटलपुष्पाणि

इतः पूर्वं यत् अशक्यम् इति चिन्तितम् आसीत् तत् इदानीं शक्यं जायमानम् अस्ति। नीलवर्णानि पाटलपुष्पाणि न भवन्ति इति एतावत्पर्यन्तं भावना आसीत्। आस्ट्रेलियादेशीयाः चत्वारः विज्ञानिनः पाटलपुष्पेषु नीलवर्णस्य योजनार्थं प्रयोगान् कृतवन्तः। ते नीलवर्णेषु शरिशु-पेट्यूनिया प्रभृतिषु पुष्पेषु स्थितं नीलवर्णकारकं जीवतत्त्वं (जीन्स्) तेभ्यः पृथक्कृत्य पाटलपुष्पसस्येषु योजितवन्तः। एषः प्रयत्नः अचिरात् एव फलप्रदः भविष्यति इति भाव्यते। १९९३ तमे वर्षे नीलवर्णं पाटलपुष्पं द्रष्टुं शक्येत इति सम्भाव्यते।





## अपूर्वाः गृध्राः

अस्माकं देशे अष्टविधाः गृध्राः सन्ति। तेषु पाण्डिचेरीगृध्राः अन्यतमाः। किन्तु एषा गृध्रजातिः इदानीं क्षीयमाणा अस्ति। एतज्जातीयाः गृध्राः पूर्वं श्रीलङ्कादेशे बाङ्ग्लादेशे च दृश्यन्ते स्म। किन्तु इदानीं तादृशी स्थितिः नास्ति। अहमदाबादनगरस्थे 'कमलानेहरूप्राणिसङ्ग्रहालये' एतज्जातीयाः त्रयः गृध्राः सन्ति। एते 'राजगृध्राः' इत्यपि ख्याताः सन्ति। एते प्रायः मानवेभ्यः दूरे एव तिष्ठन्ति।

## अतिमहती सङ्ख्या

प्रपञ्चे स्थितेषु जीविषु भ्रमराः एव अत्यधिकाः। भ्रमरेषु प्रायः २,५०,००० भेदाः सन्ति। कीटजातौ तु ५,००,००० प्रभेदाः सन्ति। कीटानाम् आहत्य सङ्ख्या तु १,०००,०००,०००,०००,००० स्यात् इति सम्भाव्यते।



# 'शुनकशिशुः

| | |
|---|---|
| I. – अहो, सुन्दरः शुनकशिशुः! कदा क्रीतवान् भवान्? | Ah, what a lovely pup! You bought it, when? |
| II. – न हि क्रीतवान्। मित्रेण उपायनरूपेण दत्तः एषः। | No, I didn't buy. One of my friends gave it as a gift. |
| I. – मृदुलानि रोमाणि। शुभ्रं शरीरम्। आकर्षकं रूपम्। | How soft are the hairs! It is snow–white and realy very attractive. |
| II. – किन्तु ध्वनिः तु ....। | But its voice.... |
| I. – ध्वनिः कोमलः स्यात्। किन्तु तेन का हानिः? लालनेच्छया खलु एषः पाल्यते? | Don't worry. It will definitely be good. What is the harm if it is not. We keep a dog as a pet! |
| II. – मम तु विचारः यत् गृहरक्षणार्थम् आवश्यकं चेदेव शुनकः पालनीयः इति। | My view is a dog is meant for guarding the house. |
| I. – पूर्वं भवतः गृहे एकः महाशुनकःआसीत् खलु? | You had a giant dog before, hadn't you? |
| II. – आम्। तत्काले एतस्मिन् परिसरे गृहाणि न आसन्। अतः रक्षणार्थं तादृशं शुनकं पालितवान् आसम्। एतम् शुनकशिशुं पश्यतु। एतस्य भषणं श्रुत्वा मार्जारः अपि भीतः न भवति। | You are perfectly right. There were no houses in this area then. So we had that dog from the security point of view. Now look at this, it is unable to frighten even a cat. |
| I. – एवं तर्हि किमर्थम् एतादृशं पालयन् अस्ति भवान्? | Why did you taken it then? |
| II. – मित्रम् अयच्छत्। बालाभ्यां तु एषः नितराम् अरोचत। पत्नी अपि इष्टवती। अतः अस्ति गृहे। | It was a friend who gave. The children liked it very much. My wife also wanted to have it. So it is with us now. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अनक्षरज्ञः - | Illiterate |
| अनुरागः - | Love |
| अभिज्ञाता - | Witness |
| अल्पः - | Small |
| असिधारा - | Blade of a sword |
| कण्डोलः - | Basket |
| कशा - | Whip |
| कारण्डवः - | Goose |
| कृषिकार्यम् - | Farming |
| कोट्यधीशः - | Millionaire |
| कोषः - | Sheath of sword |
| क्षान्तवान् - | Forgave |
| गहनम् - | Dense |
| गिलति - | Swallows (Verb) |
| गृध्रः - | Eagle |
| चञ्चूः - | Beak of a bird |
| चामरम् - | Chaamara (Used in temples) |
| चालनी - | Sieve |
| डयते - | Flies |
| निर्विण्णः - | Went off (light) |
| परिचारिका - | Maid servent |
| परिहासः - | For fun |
| पाटलपुष्पम् - | Rose |
| पादरक्षा - | Footwear |
| पुरस्कर्ता - | One who honours |
| प्रकटतया - | Openly |
| प्रत्युत - | Instead of |
| प्रस्तुम्फितवान् - | Stabbed |
| बान्धव्यम् - | Relationship |
| भ्रमरः - | Bee |
| भ्रष्टाचारः - | Corruption |
| मार्जनम् - | Dusting |
| वर्णसंयोजनम् - | Colour matching |
| विपत् - | Calamity |
| विसङ्गतिः - | Incompatibility |
| वीजयति - | Fans (Verb) |
| वृकः - | Wolf |
| शशः - | Rabbit |
| स्थायि - | Long lasting |
| हतः - | One who was murdered |

* * * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां नवम्बर्-९२ मासे प्रकटयिष्यामः।**



K.S. Vijayakar



M. Kameswara Rao

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बान्ध-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **लीलया लोकते बालिकायाः हास्यम्।**

द्वितीयचित्रम् - **स्वात्मनि एव नन्दति दर्शयन्ती हासम्।**

प्रेषकः - मधुकर वसन्तराव् काळे, ईश्वरीबायीसावन्तनिवास, सिग्नल क्याम्प्, लातूरु-५१३५६१




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

